कथमेतद्गम्यतामिति। कौलिक आह। सुभगे सत्यमभिहितं भवत्या। परं किंतु राधा नाम मे भार्या नन्दकुलप्रसूता पूर्वमासीत्। सा त्वमवतीर्णा। तेनाहमत्रायात इत्याह। सा प्राह। भगवन् यद्येवं ततो मे तातं प्रार्थय। येन सो ऽप्यविकल्पं मां तुभ्यं प्रयच्छति। कौलिक आह। सुभगे नाहं दर्शनपथं मानुषाणां गच्छामि। किं पुनरालापकरणं। तद्गान्धर्वविवाहेनात्मानं प्रयच्छ। नो चेच्छापं दत्वा सान्वयं ते पितरं भस्मसात् करिष्यामि। एवमभिधाय गरुडादवतीर्य सव्ये पाणौ गृहीत्वा तां सभयां सलज्जां वेपमानां शय्यामानयत्। ततश्च रात्रिशेषं यावत् तां वात्स्यायनोक्तविधिना निषेव्य प्रत्यूषे स्वगृहमलक्षितो जगाम। एवं तस्य तां नित्यं सेवमानस्य कालो याति। अथ कदाचित् कञ्चुकिनस्तस्या अधरोष्ठप्रबालखण्डनं दृष्ट्वा मिथः प्रोचुः। अहो पश्यत। अस्या राजकन्यकायाः पुरुषोपभुक्ताया इव शरीरावयवा विभाव्यन्ते। तत् कथं सुरक्षिते ऽप्यस्मिन् गृह एवंविधो व्यवहारः। तद्राज्ञे निवेदयामः। एवं निश्चित्य सर्वे राजानं समेत्य प्रोचुः। देव वयं न विद्मः। परं सुरक्षिते ऽप्यस्मिन् कन्यान्तःपुरे कश्चित् प्रविशति। तद्देवः प्रमाणं। तच्छ्रुत्वा राजा समाकुलेन मनसा व्यचिन्तयत्।

पुत्रीति जाता महतीह चिन्ता कस्मै प्रदेयेति महान् वितर्कः।
दत्ता सुखं प्राप्स्यति वा न वेति कन्यापितृत्वं खलु नाम कष्टं ॥२२६॥

नद्यश्च नार्यश्च सदृक्प्रभावास्तुल्यानि कूलानि कुलानि तासां।
तोयैश्च दोषैश्च निपातयन्ति नद्यो हि कूलानि कुलानि नार्यः ॥२२७॥

तथा च।

जननी मनो हरति जातवती परिवर्धते सह शुचा सुहृदां।
परसंस्कृतापि कुरुते मलिनं दुरतिक्रमा दुहितरो विपदः ॥२२८॥

एवं बहुविधं विचिन्त्य देवीं रहस्थां प्रोवाच। देवि विज्ञायतां यदेते कञ्चुकिनो वदन्ति। तस्य कृतान्तः कुपितो येनैष द्रोहः कृतः। देव्य

पि तदाकर्ण्य व्याकुली भूत्वा सत्वरं कन्यान्तःपुरे गत्वा खण्डिताधरां नखविलिखितशरीरावयवां दुहितरमपश्यत्। आह च। आः पापे कुलकलङ्ककारिणि किमेवं शीलखण्डनं कृतं। को ऽयं कृतान्तावलोकितस्त्वत्सकाशमभ्येति। तत् कथ्यतां ममाग्रे सत्यं। इति कोपाटोपविसङ्कटं वदत्यां मातरि राजपुत्री भयलज्जाननताननं प्रोवाच। अम्बे साक्षान्नारायणः प्रत्यहं गरुडारूढो निशि समायाति। चेदसत्यं मम वाक्यं तत् परोक्षं विलोकयतु निगूढतरा काचित् निशीथे भगवन्तं तं रमाकान्तं। तच्छ्रुत्वा सापि प्रहसितवदना पुलकाङ्कितसर्वाङ्गी सत्वरं गत्वा राजानमुवाच। देव दिष्ट्या वर्धसे। नित्यमेव निशीथे भगवान् नारायणः कन्यकापार्श्वे ऽभ्येति। तेन गान्धर्वविवाहेन सा विवाहिता। तदद्य रात्रौ त्वया मया च वातायनगताभ्यां निशीथे स द्रष्टव्यः। यतो न स मानुषैः सहालापं करोति। तच्छ्रुत्वा हर्षितस्य राज्ञस्तद्दिनं वर्षशतमिव जगाम। ततस्तु रात्रौ निभृतो भूत्वा राजा सकलत्रो वातायनस्थो गगणासक्तदृष्टिर्यावत् तिष्ठति। तावत् तस्मिन् समये गरुडागतं शङ्खचक्रगदाहस्तं यथोचितचिह्नं व्योम्नो ऽवतरन्तं नारायणमपश्यत्। ततः सुधापूरप्लावितमिवात्मानं मन्यमानस्तां स्वप्रियामुवाच। प्रिये नास्त्यन्यो धन्यतरो लोके मया त्वया च। यदस्मत्प्रसूतिं भगवान्नारायणः समभ्येत्य भजते। तत् सिद्धाः सर्वे ऽस्माकं हृदयस्था मनोरथाः। अधुना जामातृकप्रभावेन सकलामपि वसुमतीं वश्यां करिष्यामि। एवं निश्चित्य सर्वैः सीमाधिपैः सह मर्यादाव्यतिक्रममकरोत्। ते च तं मर्यादाव्यतिक्रमे वर्तमानमवलोक्य सर्वे समेत्य तेन सह विग्रहं चक्रुः। अत्रान्तरे स राजा देवीमुखेन तां दुहितरं प्रोवाच। पुत्रि त्वयि दुहितरि वर्तमानायां नारायणे भगवति जामातरि स्थिते तत्किमेव युज्यते यत् सर्वे ऽपि पार्थिवा मया सह विग्रहं कुर्वन्ति। तत् सम्बोध्यो ऽद्य त्वया निजभर्ता यथा मम शत्रून्

व्यापादयति। ततस्तया स कौलिको रात्रौ समायातः सन् सविनयमभिहितः। भगवंस्त्वयि जामातरि स्थिते मम तातो यच्छत्रुभिः परिभूयते तन्न युक्तं। ततः प्रसादं कृत्वा सर्वांस्तान् शत्रून् व्यापादय। कौलिक आह। सुभगे कियन्मात्रास्ते तातस्य शत्रवः। तद्विश्रब्धा भव। क्षणेन सुदर्शनचक्रेण तांस्तिलशः खण्डयिष्यामि। अथ गच्छता कालेन सर्वं देशं शत्रुभिरुद्वास्य स राजा प्राकारशेषः कृतः। तथापि तं कौलिकं वासुदेवरूपमेनं जानन् राजा नित्यमेव विशेषतः कर्पूरागुरुकस्तूरिकादिपरिमलविशेषान् नानाप्रकारवस्त्रपुष्पभक्ष्यपेयान् प्रेषयन् दुहितृमुखेन तमूचे। भगवन् नूनं प्रभाते स्थानभङ्गो भविष्यति। यतो यवसेन्धनसङ्क्षयः सञ्जातः। तथा सर्वो ऽपि जनः प्रहारैर्जर्जरितदेहः संवृत्तो योद्धुमक्षमः प्रचुरो मृतश्च। तदेवं ज्ञात्वा काले यदुचितं तत्क्रियतामिति। तच्छ्रुत्वा कौलिको व्यचिन्तयत्। स्थानभङ्गे सञ्जाते ममापि नूनं मृत्युरनया सह वियोगश्च भविष्यति। तस्माद्गरुडमारुह्य सायुधमात्मानमाकाशे दर्शयामि। कदाचिन्मां वासुदेवं मन्यमानास्ते साशङ्का अस्य राज्ञो योद्धृभिर्हन्यमाना नश्यन्ति। उक्तं च।

निर्विषेणापि सर्पेण कर्तव्या महती फटा।
विषं भवतु मा भूयात् फटाटोपो भयङ्करः ॥२२९॥

अथ यदि मम स्थानार्थं उद्यतस्य मृत्युर्भविष्यति। तदपि सुन्दरतरमेव। उक्तं च। गवार्थे ब्राह्मणार्थे च स्वाम्यर्थे स्त्रीकृते ऽथवा।
स्थानार्थे यस्त्यजेत् प्राणांस्तस्य लोकाः सनातनः ॥२३०॥

उक्तं च। चन्द्रे मण्डलसंस्थे विगृह्यते राहुणा दिनाधीशः।
शरणागतेन सार्द्धं विपदपि तेजस्विनां श्लाघ्या ॥२३१॥

एवं निश्चित्य दन्तधावनं कृत्वा तां प्रोवाच। सुभगे समस्तैः शत्रुभिर्हतैरन्नं पानीयं चास्वादयिष्यामि। किं बहुना त्वयापि सह सङ्गमं ततः करिष्यामि। परं वाच्यस्त्वयात्मपिता यत् प्रभाते प्रभूतेन सैन्येन

नगरान्निःक्रम्य योद्धव्यं। अहं चाकाशस्थित एव सर्वांस्तान् निस्तेजसः करिष्यामि। पश्चात् सुखेन भवता हन्तव्याः। यदि पुनरहं स्वयमेव तान् सूदयामि। तत् तेषां पापात्मनां वैकुण्ठगतिः स्यात्। तस्मात् ते तथा कर्तव्या यथा पलायमाना हन्यमानाः स्वर्गं न गच्छन्ति। सापि तदाकर्ण्य स्वयं गत्वा सर्वं पितुर्न्यवेदयत्। राजापि तस्या वाक्यं श्रद्दधानः प्रत्यूषे समुत्थाय सुसन्नद्धसैन्यो युद्धार्थं निश्चक्राम। कौलिको ऽपि मरणे कृतनिश्चयश्चापपाणिराकाशगतिर्युद्धाय प्रस्थितः। अत्रान्तरे भगवता नारायणेनातीतानागतवर्तमानवेदिना स्मृतमात्रो वैनतेयः सम्प्राप्तो विहस्य प्रोक्तः। भो गरुत्मन् जानासि त्वं यन्मम रूपेण कश्चित् कौलिको दारुमये गरुडे समारूढो राजकन्यकां कामयते। सो ऽब्रवीत्। देव सर्वं ज्ञायते तच्चेष्टितं। तत् किं कुर्मः साम्प्रतं। भगवानाह। अद्य कौलिको मरणनिश्चयः कृतनियमो युद्धार्थं विनिर्गतः। स नूनं क्षत्रियप्रधानशराहतो निधनमेष्यति। तस्मिन् हते सर्वो ऽपि जनो वदिष्यति। यत् प्रभूतक्षत्रियैर्मिलित्वा वासुदेवो गरुडश्च निपातितः। ततः परं लोको ऽयमावयोः पूजां न करिष्यति। तत् त्वं द्रुतं गत्वा तत्र दारुमये गरुडे सङ्क्रमणं कुरु। अहं कौलिकशरीरे प्रवेशं करिष्यामि। येन शत्रून् स व्यापादयति। शत्रुबधादावयोर्माहात्म्यवृद्धिर्भविष्यति। अथ गरुडे तथेति प्रतिपन्ने भगवान् नारायणस्तच्छरीरे सङ्क्रमणमकरोत्। ततो भगवन्माहात्म्येन स कौलिको गगणस्थः शङ्खचक्रगदाचापचिह्नितः क्षणेन लीलयैव समस्तानपि प्रधानक्षत्रियान् निस्तेजसश्चकार। ततस्तेन राज्ञा स्वसैन्यपरिवृतेन सङ्ग्रामे ते जिता निहताश्च। जातश्च लोकमध्ये प्रवादः। यथानेन विष्णुनामातृत्वप्रभावेन सर्वे शत्रवो निहता इति। कौलिको ऽपि तान् हतान् दृष्ट्वा प्रमुदितमना गगणादवतीर्णः। यावद्राजामात्यः पौरलोकाश्च तं नगरवास्तव्यं कौलिकं पश्यन्ति। ततः पृष्टः

किमेतदिति सो ऽपि मूलादारभ्य सर्वं प्राग्वृत्तान्तं न्यवेदयत्। ततः कौलिके सहसानुरञ्जितमनसा शत्रुवधादवाप्ततेजसा राज्ञा सा राजकन्यका सकलजनप्रत्यक्षं विवाहविधिना तस्मै समर्पिता। देशश्च प्रदत्तः। कौलिको ऽपि तया सार्द्धं पञ्चप्रकारं जीवलोकसारं विषयसुखमनुभवन् कालं निनायेति। अतः प्रोच्यते।

सुगुप्तस्यापि दम्भस्य ब्रह्माप्यन्तं न गच्छति।
कौलिको विष्णुरूपेण राजकन्यां निषेवते ॥२३२॥

तच्छ्रुत्वा करटक आह। भद्र अस्त्येवं। परं तथापि महन्मे भयं। यतो बुद्धिमान् सञ्जीवको रौद्रः सिंहः। तदसमर्थो ऽयं भवानेनं तस्माद्वियोजयितुं। सो ऽब्रवीत्। असमर्थो ऽपि समर्थ एव। उक्तं च यतः।

उपायेन हि तत् कुर्याद्यन्न शक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥२३३॥

कथा ॥६॥

करटक आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चित् प्रदेशे महान् न्यग्रोधपादपः। तत्र वायसदम्पती कृताश्रयौ प्रतिवसतः। अथ तयोः प्रसवकाले तद्वृक्षविवरान्निःक्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति। ततस्तौ निर्वेदादन्यवृक्षमूलनिवासिनं प्रियसुहृदं गत्वा शृगालमूचतुः। भद्र किमेवंविधे सञ्जात आवयोः कर्तव्यं भवति। एष तावद्दुष्टात्मा कृष्णसर्पो वृक्षविवरान्निर्गत्यावयोर्बालकान् भक्षयति। तत् कथ्यतां तद्रक्षार्थं कश्चिदुपायः।

यस्य क्षेत्रं नदीतीरे भार्या च परसङ्गता।
गृहे सर्पाश्रयस्तस्य कथं स्याच्चित्तनिर्वृतिः ॥२३४॥

अन्यच्च। सर्पयुक्ते गृहे वासो मृत्युरेव न संशयः।
यद्ग्रामान्ते वसेत् सर्पस्तस्य स्यात् प्राणसंशयः ॥२३५॥

अस्माकमपि तत्र स्थितानां प्रतिदिनं प्राणसंशयः। शृगालः प्राह। नात्मविषये स्वल्पो ऽपि विषादः कार्यः। नूनं स लुब्धो नोपायं

विना बध्यः स्यात्। उक्तं च।

उपायेन जयो यादृग्रिपोस्तादृग्न हेतिभिः।
उपायज्ञो ऽल्पकायो ऽपि न शूरैः परिभूयते ॥२३६॥

तथा च। भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान्।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात् ॥२३७॥

कथा ॥७॥ तावूचतुः। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चिद्वनप्रदेशे नानाजलचरसनाथं महत्सरः। तत्र च कृताश्रयो वक एको वृद्धभावमुपागतो मत्स्यान् व्यापादयितुमसमर्थः। ततश्च क्षुत्क्षामकण्ठस्तस्य सरसस्तीरमुपविष्टो मुक्ताफलप्रकरसदृशैरश्रुप्रवाहैर्धरातलमभिषिञ्चन् रुरोद। नालेनेव स्थित्या पादेनैकेन कुञ्चितग्रीवः कुमुदभ्रान्तिं जनयति धूर्तो वको बालमत्स्यानां। अथैकः कुलीरको नानाजलचरसमेतः समुपेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे। माम किमद्य त्वया नाहारवृत्तिरनुष्ठीयते। केवलमश्रुपूर्णेन निःश्वासेनावस्थीयते। स आह। वत्स सत्यमुपलक्षितं भवता। अहं मत्स्यादः। परं मया वैराग्यतया साम्प्रतं प्रायोपवेशनं कृतं। तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि। कुलीरकस्तच्छ्रुत्वा प्राह। माम किं तद्वैराग्यकारणं। स आह। वत्साहमस्मिन् सरसि जातो वृद्धिं गतश्च। तन्मयैव तच्छ्रुतं यद्द्वादशवार्षिकावृष्टिः सम्पद्यते लग्ना। कुलीरक आह। कस्माच्छ्रुतं भवता। वक आह। दैवज्ञमुखात्। यतः शनैश्चरो हि रोहिणीशकटं भित्वा भौमश्च शुक्रश्च प्रयास्यति। उक्तं च वराहमिहिरेण।

यदि भिन्ते सूर्यपुत्रो रोहिण्याः शकटमिह लोके च।
द्वादशवर्षाणि तदा न हि वर्षति माधवो भूमौ ॥२३८॥

तथा च। प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वासुधा।
भस्मास्थिसकलकीर्णा कापालिकमिव व्रतं धत्ते ॥२३९॥

तथा च। रोहिणीशकटमर्कनन्दनश्चेद्भिनत्ति रुधिरो ऽथवा शशी।
किं वदामि तदनिष्टसागरे सर्वलोकमुपयाति सङ्क्षयः ॥२४०॥

तथा च। रोहिणीशकटमध्यसंस्थिते चन्द्रमस्यशरणीकृता जनाः।
क्वापि यान्ति शिशुपाचिताशनाः सूर्यतप्तभिदुराम्बुपायिनः॥

तदेतत् सरः स्वल्पतोयं वर्तते। शीघ्रं शोषं यास्यति। अस्मिन् शुष्के यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्च। ते सर्वे तोयाभावान्नाशं यास्यन्ति। तत् तेषां वियोगं द्रष्टुमहमसमर्थः। तेनैतत् प्रायोपवेशनं मया कृतं। साम्प्रतं सर्वे स्वल्पजलाशया जलचराः स्वजनैर्गुरुजलाशयेषु नीयन्ते। केचिच्च स्वयमेव मकरगोधाशिशुमारजलहस्तिप्रभृतयो गच्छन्ति। अत्र पुनः सरसि ये जलचरास्ते निश्चिन्तास्तिष्ठन्ति। तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति। ततः स तदाकर्ण्यान्येषां जलचराणां तत्तस्य वचनं निवेदयामास। अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतय आगत्य तं वकं पप्रच्छुः। मामास्ति कश्चिदुपायो येनास्माकं रक्षा भवति। वकश्चाह। अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं पद्मिनीखण्डमण्डितं महत् सरः। यच्चतुर्विंशत्यापि वर्षैरवृष्टे ऽपि पर्जन्ये न शुष्यति। तद्यदि मम पृष्ठं कश्चिदारोहति तमहं तत्र नयामि। अथ ते जलचरा विश्वासमापन्नास्तात मातुल भ्रातरिति ब्रुवाणा अहं पूर्वमहं पूर्वमिति समन्तात् परितस्थुः। सो ऽपि दुष्टाशयस्तान् क्रमेण पृष्ठमारोप्य जलाशयस्य नातिदूराश्रयां विस्तीर्णां शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयति। भूयो ऽपि जलाशयमागत्य जलचराणां मिथ्यावार्तासन्देशकैर्मनांसि नित्यमेव रञ्जयन्नाहारवृत्तिमकरोत्। अन्यस्मिन् दिवसे स कुलीरकेणोक्तः। माम मया सह ते प्रथमः स्नेहसम्भाषः सञ्जातः। तत् किं मां परित्यज्यान्यान् नयसि। तस्मादद्य मम प्राणत्राणं कुरु। तदाकर्ण्य सो ऽपि दुष्टाशयश्चिन्तितवान्। निर्विण्णो ऽहं मत्स्यमांसा

नां तस्मादद्यैनं कुलीरकं व्यञ्जनस्थाने करोमि। बाढमित्युक्त्वा तं पृष्ठे समारोप्य तां बध्यशिलामुद्दिश्य प्रस्थितः। कुलीरको ऽपि दूरादेवास्थिपर्वतं शिलाश्रयं समुद्वीक्ष्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्। माम कियद्दूरे स जलाशयः। त्वं मदीयभारेणातिश्रान्तः। तत्कथय। सो ऽपि मन्दधीर्जलचरो ऽयमिति मत्वा न स्थले प्रभवत इति मत्वा सस्मितमिदमाह। कुलीरक कुतो ऽन्यजलाशयः। मम प्राणयात्रेयं। तस्मात् स्मर्यतामात्मनो ऽभीष्टदेवता। त्वामप्यस्यां शिलायां प्रक्षिप्य भक्षयिष्यामीति। उक्तवति तस्मिन् स्वदशनसन्दंशेन मृणालनालधवलायां मृदुग्रीवायां गृहीतो मृतश्च। अथ स तां बकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद। ततः सर्वैरेव जलचरैः पृष्टः। भो कुलीरक किं निवृत्तस्त्वं। किं शकुनकारणं किञ्चित् सञ्जातं। सो ऽपि तव मातुलको न समायातः। तत् किं चिरयति। वयं सर्वे ऽपि सोत्सुकाः कृतेक्षणास्तिष्ठामः। एवं तैरभिहिते कुलीरको विहस्य प्रोवाच। मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः। तन्मयायुःशेषतया तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयं तस्यानीता। तदलं सम्भ्रमेण। अधुना सर्वेषां जलचराणां क्षेमं भविष्यति। अतो ऽहं ब्रवीमि।

भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान्।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात् ॥२४२॥

वायस आह। भद्र तत् कथय कथं स दुष्टसर्पो बधमुपेष्यतीति। शृगाल आह। गच्छतु भवान् किञ्चिन्नगरं राजाधिष्ठानं। तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा वृक्षकोटरे प्रक्षिप। येन स सर्पः सुखेन बध्यते। अथ काकः काकी च तत्क्षणादुड्डीनौ कस्मिंश्चित् पुरे प्राप्तौ। ततश्च काकी किञ्चिदुपवनमध्ये गत्वा यावत् पश्यति। तावत् कस्यचिद्राज्ञो ऽन्तःपुरं जलासन्न

न्यस्तकनकसूत्रमुक्ताहारवस्त्राभरणं जलक्रीडां करोति। अथ सा वायसी
कनकसूत्रमेकमादाय स्ववृक्षाभिमुखं प्रतस्थे। ततश्च कञ्चुकिनो वर्षध
राश्च तन्नीयमानमुपलभ्य गृहीतलगुडहस्ताः सत्वरमनुययुः। काक्यपि
सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरतरमवस्थिता। अथ यावद्राज
पुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति। तावत् कृष्णसर्पः प्रसा
रितभोगस्तिष्ठति। ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथा
भिलषितं स्थानं गताः। वायसदम्पत्यपि ततः परं सुखेन वसतः स्म।
अतो ऽहं ब्रवीमि।

उपायेन हि तत् कुर्याद्यन्न शक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः॥२४३॥

तथा च।

उपेक्षितः क्षीणबलो ऽपि शत्रुः प्रमाददोषात् पुरुषैर्मदान्धैः।
साध्यो ऽपि भूत्वा प्रथमं ततो ऽसावसाध्यतां व्याधिरिव प्रयाति॥

तन्न किञ्चिदिह यद्बुद्धिमतामसाध्यमस्ति। उक्तं च।

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलं।
वने सिंहो मदोन्मत्तः शशकेन निपातितः॥२४५॥

करटक आह। कथमेतत्। सो ऽब्रवीत्। कस्मिंश्चिद्वनमध्ये भा कथा
सुरको नाम सिंहः प्रतिवसति स्म। अथासौ वीर्यातिरेकान्नित्यमेवा ॥८॥
नेकान् मृगशशकादीन् व्यापादयन्नोपरराम। अथान्येद्युस्तद्वनजाः सर्वे
सारङ्गवराहमहिषगवयशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः। स्वा
मिन् किमनेन सकलमृगवधेन निःफलेन यतस्तवैकेनापि मृगेण तृप्ति
र्भवति। तत् क्रियतामस्माभिः सह समयधर्मः। अद्य प्रभृति तवात्रो
पविष्टस्यापि जातिक्रमेण प्रतिदिनमेको भक्षार्थं समेष्यति। एवं कृते
तव तावत् प्राणयात्रा क्लेशं विना भविष्यति। अस्माकं पुनः सर्वो
च्छेदनं न स्यात्। तदेष राजधर्मो ऽनुष्ठीयताम्। उक्तं च।

शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाफलं ।
रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥२४६॥
विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च ।
प्रयच्छति फलं भूमिररणीव हुताशनं ॥२४७॥
प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनं ।
पीडनं धर्मनाशाय पापायायशसे स्थितं ॥२४८॥
गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः ।
पालनात् पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥२४९॥
अजा इव प्रजा हन्याद्यो मोहात् पृथिवीपतिः ।
तस्यैका जायते तृप्तिर्न द्वितीया कथञ्चन ॥२५०॥
फलार्थी नृपतिर्लोकान् पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥२५१॥
नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
अन्तरस्थगुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥२५२॥
यथा गौर्दुह्यते काले पाल्यते हि तथा प्रजाः ।
सिच्यते वीयते चैव लता पुष्पफलप्रदा ॥२५३॥
यथा वीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत् काले तद्वल्लोकः सुरक्षितः ॥२५४॥
हिरण्यं धान्यरत्नानि पानानि विविधानि च ।
तथान्यदपि यत्किञ्चित् प्रजाभ्यः स्यान्महीपतेः ॥२५५॥
लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः ।
लोकानां सङ्क्षयाच्चैव क्षयं यान्ति न संशयः ॥२५६॥

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह । अहो सत्यमभिहितं भवद्भिः । परं यदि ममोपविष्टस्यात्र नित्यमेव नैकः श्वापदः समागमिष्यति । तन्नूनं सर्वानपि भक्षयिष्यामि । अथ ते तथेति प्रतिज्ञाय नि

वृत्तिभाजस्तत्रैव वने निर्भयाः पर्यटन्ति। एकश्च प्रतिदिनं क्रमेणायाति। वृद्धो वा वैराग्ययुक्तो वा शोकग्रस्तो वा पुत्रकलत्रनाशभीतो वा तेषां मध्यात् तस्य भोजनार्थं मध्याह्नसमय उपतिष्ठते। अथ कदाचिज्जातिक्रमाच्छशकस्यावसरः समायातः। प्रेषितश्चानिच्छन्नपि समस्तमृगैः। सो ऽपि मन्दं मन्दं गत्वा वेलातिक्रमं विधाय व्याकुलितहृदयस्तस्य बधोपायं चिन्तयन् दिनशेषे प्राप्तः। सिंहो ऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्कणी परिलेलिहन् व्यचिन्तयत्। अहो मया प्रातर्निःसत्त्वं वनं कर्तव्यं। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः। अथ तं चिरादायातमन्यच्च लघुतरमवलोक्य कोपप्रज्वलितात्मा तं निर्भर्त्सयन्नाह। रे शशकाधम एकस्तावल्लघुस्त्वं सम्प्राप्तो ऽपरं वेलातिक्रमेण। तस्मादपराधात् त्वां निपात्य प्रातः सकलान्यपि सत्त्वान्युच्छेदयिष्यामि। अथ शशकः प्रणम्य सविनयं प्रोवाच। स्वामिन् नात्रापराधो मम न चापरेषां सत्त्वानां। तच्छ्रूयतां कारणं। सिंह आह। तत् सत्वरं निवेदय यावत् मम दंष्ट्रान्तर्गतो भवान् न भविष्यति। शशक आह। स्वामिन् समस्तमृगैरद्य जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततो ऽहं पञ्चशशकैः सह प्रेषितः। ततश्चाहमन्तराल आगच्छन् महता केनचिदपरसिंहेन विवरान्निर्गत्याभिहितः। रे क्व प्रस्थिता यूयं। अभीष्टदेवतां स्मरत। ततो मयाभिहितं। वयं स्वामिनो भासुरकसिंहस्य सकाश आहारार्थं समयधर्मेण गच्छामः। ततस्तेनाभिहितं। यद्येवं तर्हि मदीयमेतद्वनं मया सह समयधर्मेण समस्तैरपि श्वापदैर्वर्तितव्यं। चौररूपी स भासुरकः। अथ यदि सो ऽत्र राजा ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ। येन यः कश्चिदावयोर्मध्यात् पराक्रमेण राजा भविष्यति। स सर्वानेतान् मृगान् भक्षयिष्यति। ततो ऽहं तेनादिष्टः स्वामिसकाशमभ्यागतः। एतद्वेलातिक्रमकारणं। तदत्र

स्वामी प्रमाणं। तच्छ्रुत्वा भासुरक आह। भद्र यद्येवं तत् सत्वरं दर्शय मे तं चौरसिंहं। येनाहं मृगकोपं तस्योपरि क्षपयित्वा स्वस्थो भवामि। उक्तं च।

भूमिर्मित्रं हिरण्यं च विग्रहस्य पदत्रयं ।
नास्त्येकमपि यद्येषां न तत् कुर्यात् कथञ्चन ॥ २५७ ॥
यत्र न स्यात् फलं भूरि यत्र च स्यात् पराभवः ।
न तत्र मतिमान् युद्धं समुत्पाद्य समाचरेत् ॥ २५८ ॥

शशक आह। स्वामिन् सत्यमिदं। स्वभूमिहेतोः परिभावाच्च युध्यन्ते क्षत्रियाः। परं स दुर्गाश्रयमाश्रित्य दुर्गाणि क्रमतीव। तेन वयं विष्कम्भिताः। ततो दुर्गस्थो दुःसाध्यो रिपुर्भवति। उक्तं च।

न गजानां सहस्रेण न च लक्षेण वाजिनां ।
यत् कृत्यं साध्यते राज्ञां दुर्गेणैकेन सिध्यति ॥ २५९ ॥
शतमेको ऽपि सन्धत्ते प्राकारस्थो धनुर्धरः ।
तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविचक्षणाः ॥ २६० ॥
पुरा गुरोः समादेशाद्धिरण्यकशिपोर्भयात् ।
शक्रेण विहितं दुर्गं प्रभावाद्विश्वकर्मणः ॥ २६१ ॥
तेनापि च वरो दत्तो यस्य दुर्गं स भूपतिः ।
विजयी स्यात् ततो भूमौ दुर्गाणि स्युः सहस्रशः ॥ २६२ ॥
दंष्ट्राविरहितो नागो मदहीनो यथा गजः ।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥ २६३ ॥

तच्छ्रुत्वा भासुरक आह। भद्र दुर्गस्थमपि तं चौरं दर्शय मम येनाहं व्यापादयामि। उक्तं च यतः।

जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत् ।
महाबलो ऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ २६४ ॥
आत्मनः शक्तिमुद्वीक्ष्य मानोन्मादं तु यो व्रजेत् ।

शत्रून् हन्यात् स एको ऽपि क्षत्रियान् भार्गवो यथा ॥२६५॥

शशक आह। अस्त्येतत्। तथापि बलवान् स मया दृष्टः। तन्न युज्यते स्वामिनस्तस्य सामर्थ्यमविज्ञाय गन्तुं। उक्तं च यतः।

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥२६६॥
यो बलप्रोन्नतं याति निहन्तुं सबलो ऽप्यरिं।
विमदः स निवर्तेत शीर्णदन्तो यथा गजः ॥२६७॥

भासुरक आह। भो किं तवानेन व्यापारेण। दर्शय मे तं दुर्गस्थमपि। शशक आह। यद्येवं तदागच्छतु स्वामी। एवमुक्त्वाग्रे व्यवस्थितः। ततश्च कश्चित् कूपमासाद्य भासुरकमाह। स्वामिन् कस्ते प्रतापं सोढुं समर्थः। येन त्वां दृष्ट्वासौ दूरतो ऽपि चौरः प्रविष्टः स्वदुर्गं। तदागच्छ येन दर्शयामीति। तच्छ्रुत्वा भासुरक आह। भद्र सत्वरं दर्शय मे दुर्गं। तदनुदर्शितस्तेन कूपः। सो ऽपि मूर्खः सिंहः कूपमध्य आत्मनः प्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच। ततस्तत्प्रतिशब्देन द्विगुणतरो नादः कूपात् समुत्थितः। अथासौ तं नादमाकर्ण्य शक्ततरो ऽयमिति मत्वा आत्मानं तस्योपरि क्षिप्त्वा प्राणान् मुमोच। शशको ऽपि हृष्टमनाः सर्वान् मृगानभिनन्द्य तैः प्रशस्यमानो यथासुखं तत्र वने वसति स्म। अतो ऽहं ब्रवीमि।

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलं।
वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥२६८॥

तद्यदि भवान् कथयति तत् तत्रैव गत्वा तयोः स्वबुद्धिप्रभावेन मित्रभेदं करोमि। करटक आह। भद्र यद्येवं तच्छिवास्ते पन्थानः सन्तु। यथाभिप्रेतमनुष्ठीयतां। अथ दमनकः सञ्जीवकवियुक्तं पिङ्गलकमवलोक्य तत्रान्तरे प्रणम्याग्रे समुपविष्टः। पिङ्गलको ऽपि तमाह। भद्र किं

चिरादृष्टः। दमनक आह। न किञ्चिद्देवपादानामस्माभिः प्रयोजनं। तेनाहं नागच्छामि। तथापि राजप्रयोजनविनाशमवलोक्य दन्दह्यमानहृदयो व्याकुलतया स्वयमेवाभ्यागतो वक्तुं। उक्तं च यतः॥

प्रियं वा यदि वा द्वेष्यं शुभं वा यदि वाशुभं।
अपृष्टो ऽपि हि तं वदेद्यस्य नेच्छेत् पराभवं॥२६९॥

अथ तस्य साभिप्रायं तद्वचनमाकर्ण्य पिङ्गलक आह। किं वक्तुमना भवान्। तत्कथ्यतामिति। स प्राह। देवायं सञ्जीवको युष्मत्पादानामुपरि द्रोहबुद्धिरिति। विश्वासगतस्य मम विजन इदमाह। भो दमनक दृष्टा मयास्य पिङ्गलकस्य सारासारता। तदहमेनं हत्वा सकलमृगाधिपत्यं त्वत्साचिव्यपदवीसमन्वितं करिष्यामि। तद्वज्रसारप्रहारसदृशं दारुणं वचः समाकर्ण्य मोहमुपगतो न किञ्चिदप्युक्तवान्। दमनको ऽपि तस्य तमाकारमवलोक्य चिन्तितवान्। अयं तावत् सञ्जीवकनिबद्धरागः। तन्नूनमनेन मन्त्रिणा राजा विनाशमवाप्स्यतीति। उक्तं च।

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा।
तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते॥
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा।
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभिद्रुह्यति॥२७०॥

तत् किमत्र युक्तमिति। पिङ्गलको ऽपि चेतनां समासाद्य कथमपि तमाह। दमनक सञ्जीवकस्तावदस्माकं प्राणसमो भृत्यः। स कथं ममोपरि द्रोहबुद्धिं करोति। दमनक आह। देव भृत्यो न भृत्य इत्यनैकान्तिकमेतत्। उक्तं च।

न सो ऽस्ति पुरुषो राज्ञां यो न कामयते श्रियं।
अशक्ता एव सर्वत्र नरेन्द्रं पर्युपासते॥२७१॥

पिङ्गलक आह। भद्र तथापि मम तस्योपरि चित्तवृत्तिर्न विकृतिं

यति। अथवा साधिदमुच्यते।

अनेकदोषदुष्टो ऽपि कायः कस्य न वल्लभः।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव स ॥२७२॥

दमनक आह। अत एवायं दोषः। उक्तं च।

अस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः ॥२७३॥

अपरं केन गुणविशेषेण स्वामी सञ्जीवकं निर्गुणमपि निकटे धारयति। अथ देव यद्येवं चिन्तयसि। महाकायो ऽयमनेन रिपून् व्यापादयिष्यामीति। तदस्मान्न सिध्यति। यतो ऽयं शष्पभोजी देवपादानां पुनः शत्रवो मांसाशिनः। तद्रिपुसाधनमस्य सहायत्वेन न भवति। तस्मादेनं दूषयित्वा हन्यतामिति। पिङ्गलक आह।

उक्तो भवति यः पूर्वं गुणवानिति संसदि।
तस्य दोषो न वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥२७४॥

अन्यच्च मयास्य तव वचनेनाभयप्रदानं दत्तं। तत् कथं स्वयमेव व्यापादयिष्यामि। तत् सर्वथा सञ्जीवको ऽयं सुहृदस्माकं। न तं प्रति कश्चिन्मन्युरिति। उक्तं च।

यतः सदैन्यं प्राप्ता श्रीर्नैत एवार्हति क्षयं।
विषवृक्षो ऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतं ॥२७५॥

तथा च। आदौ न चाप्रणयिनां प्रणयो विधेयो
दत्तो ऽथवा प्रतिदिनं परिपोषणीयः।
उत्क्षिप्य यत् क्षिपति तत् प्रकरोति लज्जां
भूमौ स्थितस्य पतनाद्भयमेव नास्ति ॥२७६॥

तथा च। उपकारिषु यः साधुः साधुत्वे तस्य को गुणः।
अपकारिषु यः साधुः स साधुः सद्भिरिष्यते ॥२७७॥

तद्द्रोहबुद्धेरपि मयास्य न विरुद्धमाचरणीयं। दमनक आह। स्वामिन्

नैष राजधर्मो यद्द्रोहबुद्धिरपि हन्यते।

उक्तं च। तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनं।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥२७८॥

अपरं वयस्य सखित्वात् सर्वो राजधर्मः परित्यक्तः। राजधर्माभावात् सर्वो ऽपि परिजनो विरक्तः। यतः सञ्जीवकः शष्पभोजी भवान् मांसादस्तव प्रकृतयश्च। स्वप्रकृतिरपि तत्रैवाध्यवसायेन हिंसापराङ्मुखीव भाति। तत्तव व्यवसायवाह्यं कुतस्तेषां मांसाशनं। अतः सर्वे ऽपि परिचरास्तव मांसादास्तद्रहितं त्वां त्यक्त्वा यास्यन्ति वनान्तरं। ततो ऽपि त्वं विनष्ट एवास्य सङ्गत्या। न पुनस्ते कदाचिदाखेटके गतिर्भविष्यति। उक्तं च।

यादृशैः सेव्यते भृत्यैर्यादृशांश्चोपसेवते।
कदाचिन्नात्र सन्देहस्तादृग्भवति पूरुषः ॥२७९॥

तथा च। सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते।
स्वातौ सागरशुक्तिकुक्षिपतितं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणाः संवासतो जायते ॥२८०॥

तथा च। असतां सङ्गदोषेण साधवो यान्ति विक्रियां।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणं गतः ॥२८१॥

अत एव सन्तो नीचबन्धं वर्जयन्ति। उक्तं च।

न ह्यविज्ञातशीलाय प्रदातव्यः प्रतिश्रयः।
मत्कुणस्य नु दोषेण हता मन्दविसर्पिणी ॥२८२॥

कथा ॥१॥ पिङ्गलक आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्यचिन्महीपतेः कस्मिंश्चित् स्थाने मनोरमं शयनं। तत्र शुक्लतरपटयुगलमध्यसंस्थिता मन्दविसर्पिणी नाम श्वेता यूका प्रतिवसति स्म। सा च तस्य महीपतेः रक्तमास्वादयन्ती सुखेन कालं नयमाना तिष्ठति।

अथान्येद्युस्तत्र शयने कश्चिद्भ्राम्यन्नग्निमुखो नाम मत्कुणः समायातः। अथ तं दृष्ट्वा सा विषण्णवदना प्रोवाच। भो ऽग्निमुख कुतस्त्वमत्रानुचितस्थाने समायातः। तद्यावन्न कश्चिद्वेत्ति तावच्छीघ्रं गम्यतामिति। स आह। भगवति गृहे आगतस्यासाधोरपि नैतद्युज्यते वक्तुं। उक्तं च।

एह्यागच्छ समाश्रयासनमिदं कस्माच्चिराद्दृश्यसे
का वार्त्ता अतिदुर्बलो ऽसि कुशलं प्रीतो ऽस्मि ते दर्शनात्।
एवं नीचजने ऽपि युज्यति गृहं प्राप्ते सतां सर्वदा
धर्मो ऽयं गृहमेधिनां निगदितः स्मार्त्तैर्लघुः स्वर्गदः ॥२८३॥

अपरं मयानेकमानुषाणामनेकविधरुधिराण्यास्वादितान्याहारदोषात् क्षारकटुतिक्तकषायाम्लरसास्वादानि। न च मया कदाचिन्मधुररक्तमास्वादितं। तद्यदि त्वं प्रसादं करोषि। तदस्य भूपतेर्विविधव्यञ्जनपक्वान्नचूष्यलेह्यखाद्याहारवशादस्य शरीरे यन्मिष्टरक्तं संजातं। तस्यास्वादनेन सौख्यं सम्पादयामि जिह्वया। उक्तं च।

रङ्कस्य भूपतेर्वापि जिह्वासौख्यं समं स्मृतं।
तन्मात्रं च स्मृतं सारं तदर्थं यतते जनः ॥२८४॥

तथा च। यद्येव न भवेल्लोके कर्म जिह्वाप्रतुष्टिदं।
तन्न भृत्यो भवेत् कश्चित् कस्यचित् वशगो ऽथवा ॥२८५॥

अन्यच्च। यदसत्यं वदेन्मर्त्यो यद्वासेव्यं च सेवते।
यद्गच्छति विदेशं च तत् सर्वमुदरार्थतः ॥२८६॥

तन्मया गृहागतेन बुभुक्षया पीड्यमानेन त्वत्सकाशाद्भोजनमर्थनीयं। तन्न त्वयैकाकिन्यास्य भूपते रक्तभोजनं कर्तुं युज्यते। तच्छ्रुत्वा मन्दविसर्पिण्याह। भो मत्कुण अहमस्य भूपते रक्तमास्वादयामि। परं निद्रावशगतस्य त्वं पुनरग्निमुख चपल। तद्यदि मया सह रक्तपानं करोषि तत्तिष्ठ। अभीष्टतरं रक्तमास्वादय। सो ऽब्रवीत्। भगवत्येवं

करिष्यामि। यावत् त्वं नास्वादयसि प्रथमं भूपते रक्तं तावन्मम देवगुरुकृतः शपथः स्यात्। एवं तयोः परस्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः। अथासौ मत्कुणो जिह्वालौल्योत्कृष्टौत्सुक्याज्जाग्रतमपि तं महीपतिमदशत्। अथ वा साध्विदमुच्यते।

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीततां ॥२८७॥
यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः।
तत् स्वभावो ऽत्र मर्त्यानां शक्यते कर्तुमन्यथा ॥२८८॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः। अहो ज्ञायतामत्र प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति। येनाहं दष्ट इति। अथ ये कञ्चुकिनस्तत्र स्थितास्ते प्रच्छादनपटं सत्वरं प्रसार्य सूक्ष्मदृष्ट्या वीक्षां चक्रुः। अत्रान्तरे स मत्कुणो ऽतिचापल्यात् खट्वान्तं प्रविष्टः। सापि मन्दविसर्पिणी वस्त्रसन्ध्यन्तर्गता तैर्दृष्टा व्यापादिता च। अतो ऽहं ब्रवीमि।

न ह्यविज्ञातशीलाय प्रदातव्यः प्रतिश्रयः।
मत्कुणस्य तु दोषेण हता मन्दविसर्पिणी ॥२८९॥

एवं ज्ञात्वा त्वयैष वध्यः। नो चेत् त्वां व्यापादयिष्यति। उक्तं च।

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः।
स एव मृत्युमाप्नोति यथा राजा ककुद्रुमः ॥२९०॥

कथा ॥१०॥ पिङ्गलक आह। कथमेतत्। सो ऽब्रवीत्। कस्मिंश्चिद्वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसति स्म। स कदाचित् क्षुधाविष्टो जिह्वालौल्यान्नगरान्तरे प्रविष्टः। अथ तं नगरवासिनः सारमेया अवलोक्य सर्वतः परिधावन्तं तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः। सो ऽपि तैर्भक्ष्यमाणः प्राणभयात् प्रत्यासन्नं रजकगृहं प्रविष्टः। तत्र च नीलीरसपरिपूर्णं महाभाण्डं सज्जीकृतमासीत्। तत्रापि सारमेयैः समन्वितः

पपात। अथ यावन्निष्क्रान्तस्तावन्नीलीवर्णः समं सञ्जातः। ततः सर्वे ते सारमेयास्तं शृगालविशेषमजानन्तो यथाभीष्टदिशं जग्मुः। चण्डरवो ऽपि तद्दूरमासाद्य काननाभिमुखं प्रतस्थे। नैव नीलीवर्णेन कदाचित् त्यज्यते। उक्तं च।

वज्रलेपस्य मूर्खस्य नारीणां मर्कटस्य च।
एको ग्राहस्तु नीचानां नीलीमद्यपयोस्तथा ॥२११॥

अथ तं हरगलगरलतमालसमप्रभमपूर्वं सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृकप्रभृतयो ऽरण्यनिवासिनो भयव्याकुलीकृतमनसः समन्तात् पलायनक्रियां कुर्वन्ति कथयन्ति च। अहो अपूर्वमेतत् सत्त्वं कुतो ऽप्यागतं। तन्न विज्ञायते। कीदृगस्य चेष्टितं पौरुषं च। तद्दूरतरं गच्छामः। उक्तं च।

न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमं।
न तस्य विश्वसेत् प्राज्ञो यदीच्छेच्छ्रियमात्मनः ॥२१२॥

चण्डरवो ऽपि तान् भयव्याकुलितान् विज्ञायेदमाह। भो भो श्वापदाः किं यूयं मां दृष्ट्वैवं सन्त्रस्ता व्रजथ। तन्न भेतव्यं। अहं ब्रह्मणाद्य स्वयमेवाकार्याभिहितः। यच्छ्वापदानां मध्ये कश्चिद्राजा नास्ति। तत्त्वं मयाद्य सर्वश्वापदप्रभुत्वे ऽभिषिक्तः ककुद्रुमाभिधः। ततो गत्वा क्षितितले तान् सर्वान् परिपालयेति। ततो ऽहमत्रागतः। तन्मम छत्रछायायां सर्वैरेव श्वापदैः सदैव वस्तव्यमिति। अहं ककुद्रुमो नाम राजा त्रैलोक्ये श्वापदराजा सञ्जातः। तच्छ्रुत्वा ते श्वापदाः सिंहपुरःसराः स्वामिन् प्रभो समादिशेति वदन्तस्तं परिवव्रुः। अथ तेन सिंहस्यामात्यपदवी प्रदत्ता। व्याघ्रस्य च शय्यापालत्वं। द्वीपिनस्ताम्बूलाधिकारः। करिणः प्रतीहारत्वं। वानरस्य छत्रधारत्वं। ये चात्मीयजात्यास्तैः सहालापमात्रमपि न करोति। शृगालाः सर्वे ऽप्यर्द्धचन्द्रं दत्त्वा निःसारिताः। एवं तस्य राजक्रियायां वर्तमानस्य ते सिंहा

दयो मृगान् व्यापाद्य तत्पुरतः प्रादयन्ति। सो ऽपि प्रभुधर्मेण सर्वेषां तान् विभज्य प्रयच्छति। एवं गच्छति काले कदाचित् तेन सभागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलो ऽश्रावि। तं शब्दं श्रुत्वा पुलकिततनुरानन्दाश्रुपरिपूर्णनयन उत्थाय तारस्वरेण विरोतुमारब्धवान्। अथ ते सिंहादयस्तमाकर्ण्य तारस्वरं शृगालो ऽयमिति मत्वा सलज्जमधोमुखाः क्षणमेकं स्थित्वा मिथः प्रोचुः। भो वाहिता वयमनेन क्षुद्रशृगालेन तद्वध्यतां वध्यतामिति। सो ऽपि तदाकर्ण्य पलायितुमिच्छन्ननुचितस्थाने ऽपि सिंहादिभिः खण्डशः कृतो मृतश्चेति। अतो ऽहं ब्रवीमि।

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः।
स एव मृत्युमाप्नोति यथा राजा ककुद्रुमः॥२१३॥

तदाकर्ण्य पिङ्गलक आह। भो दमनक कः प्रत्ययो ऽत्र विषये यत् स ममोपरि दुष्टबुद्धिः। स आह। देवाद्य ममाग्रे तेन निश्चयः कृतः। यत् प्रभाते पिङ्गलकं वधिष्यामि। तदत्र विषय एष एव प्रत्ययः। प्रभाते ऽवसरवेलायामारक्तमुखनयनः स्फुरिताधरो दिशो ऽवलोकयन्ननुचितस्थानोपविष्टस्त्वां क्रूरदृष्ट्या विलोकयिष्यति। एवं ज्ञात्वा यदुचितं तत् कर्तव्यमिति। एवमुक्त्वा तं प्रणम्य सञ्जीवकमुद्दिश्य प्रस्थितः। सञ्जीवको ऽपि सोद्वेगाकारं मन्दं मन्दं समायान्तं वीक्ष्य सादरं तमुवाच। भो मित्र स्वागतं ते। चिराद्दृष्टो ऽसि। शिवमपि भवतः। तत् कथय येनादेयमपि तुभ्यं गृहागताय प्रयच्छामि। उक्तं च यतः।

ते धन्यास्ते विवेकज्ञास्ते सभ्या इह भूतले।
आगच्छन्ति गृहे येषां कार्यार्थं सुहृदो जनाः॥२१४॥

दमनक आह। भो कथं शिवं सेवकजनस्य। उक्तं च।

सम्पत्तयः परायत्ताः सदा चित्तमनिर्वृतं।

स्वजीविते ऽप्यविश्वासस्तेषां ये नृपसेवकाः ॥२९५॥

तथा च। सेवया धनमिच्छद्भिः सेवकैः पश्य यत् कृतं।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितं ॥२९६॥

अन्यच्च। तावज्जन्मापि दुःखाय ततो दुर्गतता सदा।
तत्रापि सेवया वृत्तिरहो कष्टपरम्परा ॥२९७॥
जीवन्तो ऽपि मृताः पञ्च व्यासेन परिकीर्तिताः।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥२९८॥
नाश्नाति स्वेच्छयौत्सुक्याद्विनिद्रो न प्रबुध्यते।
न निःशङ्कं वचो ब्रूते सेवको ऽप्यत्र जीवति ॥२९९॥
सेवा स्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रजल्पितं।
स्वच्छन्दं चरति चात्र सेवकः परशासनात् ॥३००॥
भूशय्या ब्रह्मचर्यं च कृशत्वं लघुभोजनं।
सेवकस्य यतेर्यद्वद्विशेषः पापकर्मजः ॥३०१॥
शीतातपादिकष्टानि सहते यानि सेवकः।
धनाय तानि चाल्पानि यदि धर्मान्न मुच्यते ॥३०२॥
मृदुनापि सुवृत्तेन सुमृष्टेनापि हारिना।
मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥३०३॥

सञ्जीवक आह। अथ भवान् किं वक्तुमनाः। सो ऽब्रवीत्। मित्र सचिवानां न मन्त्रभेदं कर्तुं युज्यते। उक्तं च यतः।

यो मन्त्रं स्वामिनो भिन्द्यात् साचिव्ये सन्नियोजितः।
स हत्वा नृपतेः कार्यं स्वयं च नरकं व्रजेत् ॥३०४॥
येन यस्य कृतो भेदः सचिवेन महीपतेः।
तेन शस्त्रबधस्तस्य कृत इत्याह नारदः ॥३०५॥

तथापि मया तव स्नेहपाशबद्धेन मन्त्रभेदः कृतः। यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः प्रविष्टश्च। उक्तं च।

विश्रम्भाद्यस्य यो मृत्युमवाप्नोति कथञ्चन ।
तस्य हत्या तदुत्थानं प्राहेदं वचनं मनुः ॥ ३०६ ॥

तत्तवोपरि पिङ्गलको ऽयं दुष्टबुद्धिः । कथितं चाद्यानेन मत्पुरतश्चतुष्कर्णतया यत् प्रभाते सञ्जीवकं हत्वा समस्तं मृगपरिवारं चिरात् तृप्तिं नेष्यामि । ततः स मयोक्तः । स्वामिन्नयुक्तमिदं यन्मित्रद्रोहेण जीवनं क्रियत इति । उक्तं च यतः ।

अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति ।
तदर्थेन विचीर्णेन न कथञ्चित् सुहृद्वधः ॥ ३०७ ॥

ततस्तेनाहं सामर्थ्येनोक्तः । भो दुष्टबुद्धे सञ्जीवकस्तावच्छष्पभोजी वयं मांसाशिनः । तदस्माकं स्वाभाविकं वैरमिति । तत् कथमात्मसकाशे रिपुरुपेक्ष्यते । तस्मात् सामादिभिरुपायैर्हन्यतामिति । न च हते तस्मिन् दोषः स्यात् । उक्तं च ।

दत्वापि कन्यकां वैरी निहन्तव्यो विपश्चिता ।
अन्योपायैरशक्यो यो हते दोषो न विद्यते ॥ ३०८ ॥
कृत्याकृत्यं न मन्येत क्षत्रियो युधि सङ्गतः ।
प्रसुप्तो द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः ॥ ३०९ ॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमिहागतः । साम्प्रतं मे नास्ति विश्वासघातकदोषः । मया सुगुप्तमन्त्रस्तव निवेदितः । तद्युक्तं प्रतिभाति तत् कुरुष्वेति । अथ सञ्जीवकस्तस्य तद्वचनं वज्रपातदारुणं श्रुत्वा क्षणं मोहमुपागतः । पश्चाच्चेतनं लब्ध्वा सवैराग्यमिदमाह । अहो साधिदमुच्यते ।

दुर्जनगम्या नार्यः प्रायेणास्नेहवान् भवति राजा ।
कृपणानुसारि च धनं मेघो गिरिजलधिवर्षी च ॥ ३१० ॥
अहं हि सम्मतो राज्ञो य एवं मन्यते कुधीः ।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः ॥ ३११ ॥

वरं वनं वरं भैक्ष्यं वरं भारोपजीवनं ।
वरं व्याधिर्मनुष्याणां नाधिकारेण सम्पदः ॥३१२॥

तदयुक्तं मया कृतं। यदनेन सह मैत्री कृता। उक्तं च यतः।

ययोरेव समं वित्तं ययोरेव समं कुलं।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥३१३॥

तथा च। मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यं॥

तद्यदि गत्वा तं प्रसादयिष्यामि। तथापि न मे प्रसादं यास्यति। उक्तं च यतः।

निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रशाम्यति।
अकारणाद्द्वेषपरो हि यो भवेत् कथं नरस्तं परितोषयिष्यति ॥३१५॥

अहो साध्विदमुच्यते।

भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां।
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा।
तस्मादम्बुपतेरिवावनिपतेः सेवा सदा शङ्किनी ॥३१६॥

तथा च। भावस्निग्धैरुपकृतमपि द्वेष्यतां याति लोके।
साक्षादन्यैरपकृतमपि प्रीतये चोपयाति।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां।
सेवाधर्मः परमगहनो योगिनामप्यसाध्यः ॥३१७॥

तत् परिज्ञातं मया मम प्रसादमसहमानैरेष पिङ्गलको ऽन्यैः समीपवर्तिभिः प्रकोपितः। तेनायं ममादोषस्याप्येवं वदति। उक्तं च।

प्रभोः प्रसादमन्यस्य न सहन्तीह सेवकाः।
सपत्न्य इव सङ्क्रुद्धाः सपत्न्याः सुकृतैरपि ॥३१८॥

भवति चाप्येवं यतो गुणवत्सु समीपवृत्तिषु गुणहीनानां न प्रसादो

भवति। उक्तं च।

गुणवत्तरपात्रेण छाद्यन्ते गुणिनां गुणाः।
रात्रौ दीपशिखा कान्तिर्न भानावुदिते सति ॥३१९॥

दमनक आह। भो मित्र यद्येवं तत्र नास्ति ते भयं। प्रकोपितो ऽपि स तैर्दुर्जनैस्तव वचनरचनया प्रसादं यास्यति। स आह। भो न युक्तमुक्तं भवता। लघूनामपि दुर्जनानां मध्ये स्थातुं न शक्यते। उपायान्तरं विधाय ते नूनं विघ्नन्ति। उक्तं च यतः।

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः।
कुर्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा ॥३२०॥

कथा ॥११॥ दमनक आह। कथमेतत्। सो ऽब्रवीत्। अथ कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति। तस्य चानुचरा द्वीपिवायसगोमायवः सन्ति। अथ कदाचित् तैरितस्ततो भ्रमद्भिः सार्थभ्रष्टः क्रथनको नामोष्ट्रो दृष्टः। अथ सिंह आह। अहो अपूर्वमिदं सत्त्वं। ततो ज्ञायतां किमेतदारण्यमुत ग्राम्यं वेति। तच्छ्रुत्वा वायस आह। भो स्वामिन् ग्राम्यो ऽयमुष्ट्रनामा जीवविशेषस्तव भोज्यः। तद्व्यापाद्यतां। सिंह आह। नाहं गृहागतं हन्मि। उक्तं च।

गृहे शत्रुमपि प्राप्तं विश्वस्तमकुतोभयं।
यो हन्यात् तस्य पापं स्याच्छतब्राह्मणघातजं ॥३२१॥

तदभयप्रदानं दत्त्वा मत्सकाशमानीयतां येनास्यागमनकारणं पृच्छामि। अथासौ सर्वैरपि विश्वास्याभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः। प्रणम्योपविष्टश्च। ततस्तस्य पृच्छतस्तेनात्मवृत्तान्तः सर्वः सार्थभ्रंशसमुद्भवो निवेदितः। ततः सिंहेनोक्तं। भो क्रथनक मा त्वं ग्रामं गत्वा भूयो ऽपि भारोद्वहनकष्टभागी भूयाः। तदत्रैवारण्ये निर्विशङ्को मरकतसदृशानि शष्पाग्राणि भक्षयन् मया सह वस। सो ऽपि तथेत्युक्त्वा तेषां मध्ये विचरन्नकुतो ऽपि भयमिति सुखेनास्ते। तथान्येद्युर्मदोत्क

ऽस्य महागजेनारण्यचारिणा सह युद्धमभूत्। तत्र तस्य दन्तमुषलप्रहारैर्व्यथा सञ्जाता। व्यथितः कथमपि न प्राणैर्विमुक्तः। अथ शरीरासामर्थ्यान्न कुत्रचित् पदमपि चलितुं शक्नोति। ते ऽपि सर्वे काकादयो ऽप्रभुत्वेन तस्य क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान् सिंहः प्राह। भो अन्विष्यतां कुत्रचित् किञ्चित् सत्वं येनाहमेतामपि दशां प्राप्तस्तं हत्वा युष्मद्भोजनं सम्पादयामि। अथ ते चत्वारो ऽपि भ्रमितुमारब्धाः। यावन्न किञ्चित् पश्यन्ति तावद्वायसशृगालौ परस्परं मन्त्रयतः। शृगाल आह। भो वायस किं प्रभूतभ्रान्तेन। यदस्माकं प्रभोः क्रथनको विश्वस्तस्तिष्ठति। तदेनं हत्वा सर्वपरिवारस्य प्राणयात्रां कुर्मः। वायस आह। भो युक्तमुक्तं भवता। परं स्वामिना तस्याभयं दत्तमिति। तेनाबध्यो ऽयमिति। शृगाल आह। भो वायस अहं स्वामिनं विज्ञाप्य तथा करिष्ये यथा स्वामी बधं करिष्यति। तत् तिष्ठन्तु भवन्तो ऽत्रैव यावदहं गत्वा गृहं प्रभोराज्ञां गृहीत्वागच्छामि। एवमभिधाय सत्वरं सिंहमुद्दिश्य प्रस्थितः। अथ सिंहमासाद्येदमाह। स्वामिन् भ्रान्त्वा समागता वयं समस्तं वनं। परं न किञ्चित् सत्वं समासादितं। तत् किं कुर्मो वयं साम्प्रतं बुभुक्षया पदमेकमपि प्रचलितुं न शक्ताः। देवो ऽपि पथ्याशीव वर्तते। तद्यदि देवादेशो भवति। तदा क्रथनकपिशितेनाद्य पथ्या क्रिया क्रियते। अथ सिंहस्तस्य तद्दारुणं वचनमाकर्ण्य सकोपमिदमाह। धिग् धिक् पापाधम। यद्येवं भूयो वदसि। तत् त्वां तत्क्षणमेव बधिष्यामि। यतो मया तस्याभयं प्रदत्तं। तत् कथं स्वयमेव व्यापादयामि। उक्तं च।

न गोप्रदानं न महीप्रदानं नान्नप्रदानं हि तथा प्रधानं।
यथा वदन्तीह बुधाः प्रधानं सर्वप्रदानेष्वभयप्रदानं ॥ ३२२ ॥

एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणं ॥ ३२३ ॥

तच्छ्रुत्वा शृगाल आह। स्वामिन् यद्यभयप्रदानं दत्त्वा बधः क्रियते। तदा ते दोषो भवति। यदि पुनः स देवपादानां भक्त्यात्मनो जीवितं प्रयच्छति। तत्र न दोषः। ततो यदि स्वयमेवात्मानं बधाय नियोजयति। तद्बध्यो ऽथवास्माकं मध्यादिकतमो बध्य इति। यतो देवपादाः पथ्याशिनः क्षुधानिरोधादन्त्यां दशां यास्यन्ति। तत् किमेतैः प्राणैरस्माकं यत् स्वाम्यर्थे न यास्यन्ति। यदि स्वामिपादानां किञ्चिदनिष्टं भविष्यति। तदास्माभिः पृष्ठतो ऽपि वह्निप्रवेशः कार्यः॥ उक्तं च।

यस्मिन् कुले यः पुरुषः प्रधानः स सर्वयत्नेन हि रक्षणीयः।
तस्मिन् विनष्टे कुलसारभूते न नाभिभङ्गे ह्यरयो वहन्ति॥३२४॥

तदाकर्ण्य मदोत्कट आह। यद्येवं तत् कुरुष्व यद्रोचते। तच्छ्रुत्वा स त्वरं गत्वा सर्वांस्तानुवाच। भो भो स्वामिनो महत्यवस्था वर्तते। नासिकान्तप्राप्तजीवितस्तिष्ठति। तत् किं पर्यटितेन। तेन विना को ऽस्मानत्र वने रक्षयिष्यति। तद्गत्वा तस्य क्षुद्रोगात् परलोकं प्रस्थितस्यात्मशरीरदानं कुर्मः। येन स्वामिप्रसादस्यानृणतां गच्छामः।

उक्तं च। आपदं प्राप्नुयात् स्वामी यस्य भृत्यस्य पश्यतः।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत्॥३२५॥

तदनन्तरं ते सर्वे गत्वा बाष्पपूरितदृशो मदोत्कटं प्रणम्योपविष्टाः। तान् दृष्ट्वा मदोत्कटः प्राह। भो प्राप्तं दृष्टं वा किञ्चित् सत्त्वं। अथ तेषां मध्यात् काकः प्रोवाच। स्वामिन् वयं तावत् सर्वत्रैव पर्यटिताः। परं न किञ्चित् प्राप्तं दृष्टं वा सत्त्वं। तदेवं तावदद्य मां भक्षयित्वा प्राणान् धारयतु स्वामी। येन देवस्याश्वासनं भवति। मम पुनः स्वर्गप्राप्तिरिति। उक्तं च यतः।

स्वाम्यर्थे यस्त्यजेत् प्राणान् भृत्यो भक्तिसमन्वितः।
परं स पदमाप्नोति जरामरणवर्जितं॥३२६॥

तच्छ्रुत्वा शृगाल आह। भो स्वल्पकायो भवान्। तव भक्षणात्

स्वामिनः प्राणयात्रापि तावन्न भवति। अपरं दोषश्च समुत्पद्यते। उक्तं च। काकमांसं शुनोच्छिष्टं स्तोकं तदपि दुर्बलं।
भक्षितेनापि किं तेन तृप्तिर्येन न जायते ॥३२७॥

तद्दर्शिता भवता स्वामिभक्तिश्चानृण्यं भर्तृपिण्डस्य। प्राप्तश्चोभयलोकयोः साधुवादः। तदपसराग्रतः। येनाहमपि स्वामिनं विज्ञापयामि। तथानुष्ठिते सादरं शृगालः प्रणम्य प्रोवाच। स्वामिन्नद्य मम कायेन प्राणधारणं कृत्वा ममोभयलोकप्राप्तिं कुरु। उक्तं च यतः।

स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः।
यतस्तेन न दोषो ऽस्ति तेषां ग्रहणसम्भवे ॥३२८॥

अथ तच्छ्रुत्वा द्वीपी प्राह। भोः साधूक्तं भवता। परं भवानपि स्वल्पकायः स्वजात्यश्च नखायुधत्वादभक्ष्य एव। उक्तं च।

नाभक्ष्यं भक्षयेत् प्राज्ञः प्राणैः कण्ठगतैरपि।
विशेषात् तदपि स्तोकं लोकद्वयविनाशनं ॥३२९॥

तद्दर्शितं त्वयात्मनः कौलीन्यं। अथवा साधु चेदमुच्यते।

एतदर्थं कुलीनानां नृपाः कुर्वन्ति सङ्ग्रहं।
आदिमध्यावसानेषु न ते यान्ति हि विक्रियां ॥३३०॥

तदपसरतु भवानग्रतो येनाहमपि स्वप्रभुं प्रसादयामि। तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह। स्वामिन् क्रियतामद्य मम प्राणैः प्राणयात्रा। दीयतां मे स्वर्गे ऽक्षयो वासः। विस्तीर्यतां पृथ्वीतले प्रभूततरं यशः। तन्नात्र विकल्पः कार्यः। उक्तं च।

मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनां।
भवेत् स्वर्गे ऽक्षयो वासः कीर्तिश्च धरणीतले ॥३३१॥

तच्छ्रुत्वा क्रथनकश्चिन्तयामास। एतैस्तावच्छोभनानि वाक्यानि प्रोक्तानि। न चैको ऽपि स्वामिना विनाशितः। तदहमपि प्राप्तकालं विज्ञापयामि। येन मम वचनमेते त्रयो ऽपि समर्थयन्ति। इति निश्चित्य

प्रोवाच। भो युक्तमुक्तं भवता। परं भवानपि नखायुधः। तत् कथं भवन्तमपि स्वामी भक्षयति। उक्तं च।

मनसापि स्वजात्यानां यो ऽनिष्टानि प्रचिन्तयेत्।
भवन्ति तस्य तान्येव लोके ऽत्रैव परत्र च ॥ ३३२॥

तदपसरतु भवान् येनाहं स्वामिनं विज्ञापयामि। तथानुष्ठिते क्रथनको ऽग्रे स्थित्वा प्रणम्योवाच। स्वामिन्नेते तावदभक्ष्या भवतां। तन्मम प्राणैः प्राणयात्रा विधीयतां। येनास्माकमुभयलोकप्राप्तिर्भवति। उक्तं च यतः।

न यज्वनो ऽपि गच्छन्ति तां गतिं नैव योगिनः।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः ॥ ३३३॥

एवमभिहिते सिंहानुज्ञातचित्रकशृगालाभ्यां विदारितकुक्षिः काकेनोत्पाटितचक्षुः क्रथनकः प्राणानत्याक्षीत्। ततश्च तैः क्षुद्रपण्डितैः सर्वैरपि भक्षितः। अतो ऽहं ब्रवीमि।

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः।
कुर्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा ॥ ३३४॥

आख्याते चाख्यानके पुनर्दमनकं सञ्जीवको ऽब्रवीत्। तद्भद्र क्षुद्रपरिवारो ऽयं ते राजा मया सम्यग्ज्ञातः सतामसेव्यश्च। उक्तं च यतः।

अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते।
तथा गृध्रसमासन्नः कलहंसो ऽपि सञ्चरन् ॥ ३३५॥

तथा च॥ गृध्राकारो ऽपि सेव्यः स्याद्धंसाकारैः सभासदैः।
हंसाकारो ऽपि सन्त्याज्यो गृध्राकारैः शनैर्नृपः ॥ ३३६॥

तन्नूनं ममोपरि केनचिद्दुर्जनेनायं प्रकोपितः। तेनैवं वदति। अथवा भवत्येतत्। उक्तं च।

मृदुना सलिलेन खन्यमानान्यवघृष्यन्ति गिरेरपि स्थलानि।
उपजापविदां च कर्णजापैः किमु चेतांसि मृदूनि मानवानां॥

कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ।
क्षपणकतामपि धत्ते पिबति सुरां नरकपाले ऽपि ॥ ३३८ ॥

अथवा साधिदमुच्यते ।

पादाहतो ऽपि दृढदण्डसमाहतो ऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ।
को ऽप्येष एव पिशुनो ऽग्रमनुष्यधर्मः
कर्णे परं स्पृशति हन्त्यपरं समूलं ॥ ३३९ ॥

तथा च । अहो खलु भुजङ्गस्य विपरीतवधक्रमः ।
कर्णे लगति चान्यस्य प्राणैरन्यो वियुज्यते ॥ ३४० ॥

तदेवं गते ऽपि किं कर्तव्यमिति । अहं त्वां सुहृद्भावात् पृच्छामि । दमनक आह । तव तावद्देशान्तरगमनं युज्यते । नैवंविधस्य कुस्वामिनः सेवां विधातुं । उक्तं च यतः ।

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ३४१ ॥

सञ्जीवक आह । अस्माकमुपरि स्वामिनि कुपिते गन्तुं न शक्यते । न चान्यत्रगतानां निर्वृत्तिर्भवति । उक्तं च यतः ।

गुरुमपराधं कृत्वा दूरं गत्वा तु न स्वपिति धीमान् ।
दीर्घौ बुद्धिमतो बाहू ताभ्यां हिंसति हिंसकं ॥ ३४२ ॥

तद्युद्धं मुक्त्वा मे नान्यदस्ति श्रेयस्करं । उक्तं च ।

न तान् हि तीर्थैस्तपसा च लोकान् स्वर्गैषिणो दानशतैः सुवित्तैः ।
क्षणेन यान् यान्ति रणे सुधीराः प्राणान् समुज्झन्ति हि ये सुशीलाः ॥

मृतैः सम्प्राप्यते श्रेयो जीवद्भिः कीर्तिरुत्तमा ।
तदुभावपि शूराणां गुणावेतौ सुदुर्लभौ ॥ ३४४ ॥
द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राट् यो ऽभियुक्तश्च रणे चाभिमुखो हतः ॥ ३४५ ॥

ललाटदेशे रुधिरं स्रवत्तं शूरस्य यस्य प्रविशेच्च वक्त्रे ।
तत् सोमपानेन समं भवेच्च सङ्ग्रामयज्ञे विधिवत् प्रदिष्टं ॥३४६॥
होमार्घ्यैर्विधिवत् प्रदानविधिना सद्विप्रवृन्दार्चनैः
यज्ञैर्भूरि सुदक्षिणैः सुविहितैः सम्प्राप्यते यत् फलं ।
सत्तीर्थाश्रमवासहोमनियमैश्चान्द्रायणाद्यैः कृतैः
पुम्भिस्तत् फलमाहवे विनिहतैः सम्प्राप्यते तत्क्षणात् ॥३४७॥

तदाकर्ण्य दमनकश्चित्तयामास। युद्धाय कृतनिश्चयो ऽयं दृश्यते। दुरात्मा तद्यदि कदाचित् तीक्ष्णशृङ्गाभ्यां स्वामिनं प्रहरिष्यति। तन्महानर्थः सम्पद्यते। तदेनं भूयो ऽपि स्वबुद्ध्या प्रबोध्य तथा करोमि यथा देशान्तरगमनं करोति। आह च। भो मित्र सम्यगभिहितं भवता। किंतु कः स्वामिभृत्ययोः सङ्ग्रामः। उक्तं च।

बलवन्तं रिपुं दृष्ट्वा किलात्मानं प्रगोपयेत् ।
बलवद्भिश्च कर्तव्या शरच्चन्द्रप्रकाशता ॥३४८॥

अन्यच्च। शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः ।
स पराभवमाप्नोति समुद्रष्टिट्टिभाद्यथा ॥३४९॥

कथा ॥१२॥ सञ्जीवक आह। कथमेतत्। दमनकः कथयति। कस्मिंश्चित् समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म। ततो गच्छति काले ऋतुसमयमासाद्य टिट्टिभी गर्भमधत्त। अथासन्नप्रसवा सती सा टिट्टिभमित्यूचे। भो कान्त मम प्रसवसमयो वर्तते। तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानं। येन तत्राहमण्डकविमोक्षणं करोमि। टिट्टिभ आह। भद्रे रम्यो ऽयं समुद्रोपकण्ठः। तदत्रैव प्रसवः कार्यः। सा प्राह। अत्र पूर्णिमादिने समुद्रवेला चरति। सा मत्तगजेन्द्रानपि समाकर्षयति। तद्दूरमन्यत्र किञ्चित् स्थानमन्विष्यतां। तच्छ्रुत्वा विहस्य टिट्टिभः प्राह। भद्रे न युक्तमुक्तं भवत्या। का मात्रा समुद्रस्य यो मम प्रसूतिं दूषयिष्यति। किं न श्रुतं भवत्या।

बद्धाम्बरचरमार्गं व्यपगतधूमं सदा महद्भयदं ।
मन्दमतिः कः प्रविशति हुताशनं स्वेच्छया मनुजः ॥ ३५० ॥
मत्तेभकुम्भविदलनकृतश्रमं सुप्तमन्तकप्रतिमं ।
यमलोकदर्शनेच्छुः सिंहं बोधयति को नाम ॥ ३५१ ॥
को गत्वा यमसदनं स्वयमन्तकमादिशत्यजातभयः ।
प्राणानपहर मत्तो यदि शक्तिः काचिदस्ति तव ॥ ३५२ ॥
प्रालेयलेशमिश्रे मरुति प्राभातिके च वातिजडे ।
गुणदोषज्ञः पुरुषो जलेन कः शीतमपनयति ॥ ३५३ ॥

तस्माद्विश्रब्धात्रैव गर्भं विमुञ्च। उक्तं च।

यः पराभवसंत्रस्तः स्वस्थानं विजहाति वा ।
तेन चेत् पुत्रिणी माता बन्ध्या धीमद्भिरुच्यते ॥ ३५४ ॥

तथा च। मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ ३५५ ॥

इत्येवं वदति टिट्टिभे विहस्यमाना टिट्टिभी विदिततत्त्वा तच्छक्तेरुक्तवती। साध्विदमेवं च बहुसदृशं।

किं भाषितेन गुरुणा लोके हास्यो भविष्यसि खगेन्द्र ।
दत्ते तदिहाश्चर्यं यच्छति को हस्तिपिण्डानि ॥ ३५६ ॥

टिट्टिभोऽब्रवीत्। किं क्रियते समुद्रेण। तदाकर्ण्य समुद्रश्चिन्तयामास। अहो गर्वोऽयं पक्षिकीटस्यास्य। अथवा साध्विदमुच्यते ।

स्वचित्तकल्पितो गर्वः कस्य केन प्रशाम्यति ।
उत्क्षिप्य टिट्टिभः पादौ शेते भङ्गभयाद्दिवः ॥ ३५७ ॥

तन्मयास्य प्रमाणं कौतूहलादपि द्रष्टव्यं। किं ममैषोऽण्डापहारे कृते करिष्यति। इति चिन्तयित्वा स्थितः। अथ प्रसवानन्तरं प्राणयात्रार्थं गतायां टिट्टिभ्यां समुद्रस्तु वेलाव्याजेनाण्डान्यपजहार। अथायाता टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभमूचे। भो

मूर्ख कथितं ते मया पूर्वमासीत्। यत् समुद्रवेलयाण्डानां विनाशो भविष्यति। तद्दूरतरं व्रजावः। परं मूढतयाहङ्कारमाश्रितो मम वचनं न करोषि। अथवा साधु चेदमुच्यते।

सुहृदां हितकामानां न करोतीह यो वचः।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ।।३५८।।

कथा ॥१३॥ टिट्टिभ आह। कथमेतत्। सा प्राह। अस्ति कस्मिंश्चिज्जलाशये कम्बुग्रीवो नाम कच्छपः। तस्य च सङ्कटविकटनाम्नी मित्रे हंससजातीये परमस्नेहकोटिमाश्रिते नित्यमेव सरस्तीरमासाद्य तेन सहानेककथा देवर्षिब्रह्मर्षिराजर्षीणां कृत्वास्तमयवेलायां स्वनीडसंश्रयं चक्रतुः। अथ गच्छता कालेनावृष्टिवशात् तत् सरः शनैः शनैः शोषमगमत्। तद्दुःखदुःखितौ तावूचतुः। भो मित्र जम्बालशेषमेतत् सरः सञ्जातं। तत् कथं भवान् भविष्यति। अथ व्याकुलत्वं नो हृदि वर्तते। तच्छ्रुत्वा कम्बुग्रीव आह। भो नास्त्यस्माकं जीवितव्यं जलाभावात्। तथाप्युपायश्चिन्त्यतामिति। उक्तं च।

मित्रार्थे बान्धवार्थे च बुद्धिमान् यतते सदा।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ।।३५९।।

तदानीयतां किञ्चित् दृढतरं रज्जुलघुकाष्ठादि। अन्विष्यतां च प्रभूतसलिलसनाथं सरः। ततो मां लघुकाष्ठाधिरूढं दन्तैरुभयतो गृहीतकोटिविभागं तत्र सरसि निनयतं। तावूचतुः। भो मित्र करिष्याव एतत्। परं भवता मौनव्रतेन स्थातव्यं। नो चेत् तव काष्ठात् पातो भविष्यति। ततः खण्डशो भविष्यसि। कच्छप आह। मम खलु मौनव्रतमद्यप्रभृति यावदाकाशगमनेन तत् सरः प्राप्यते। तथानुष्ठिते गच्छता कम्बुग्रीवेणाधोभागव्यवस्थितं किञ्चित् पुरमालोकितं। तत्र ये पौरास्ते तं तथा नीयमानमवलोक्य सविस्मयमिदमूचुः। अहो चक्राकारं किमपि पक्षिभ्यां नीयते पश्यत पश्यतेति। अथ तेषां को

लाहलमाकर्ण्य कम्बुग्रीवः प्रोवाच। भो किमेष कोलाहल इति वक्तुमना अर्द्धोक्ते निपातितः पौरैः खण्डशः कृतश्च। अतो ऽहं ब्रवीमि।

सुहृदां हितकामानां न करोतीह यो वचः।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥३६०॥

पुनश्चाब्रवीत्। अनागतविधाता च प्रत्युत्पन्नमतिस्तथा।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥३६१॥

टिट्टिभ आह। कथमेतत्। सा कथयति। कस्मिंश्चिज्जलाशये कऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्रयो मत्स्याः प्रतिवसन्ति ॥१
स्म। अथ कदाचित् तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीवद्भिरभिहितं। अहो बहुमत्स्यो ऽयं ह्रदः। कदाचिदपि नास्माभिरन्वेषितः। तदद्य तावदाहारवृत्तिः सञ्जाता। सन्ध्यासमयश्च संवृत्तः। तत् प्रभाते ऽत्रागन्तव्यमिति निश्चयः। अथ तेषां तत् कुलिशपातोपमं वचः समाकर्ण्यानागतविधाता सर्वान् मत्स्यानाहूयेदमूचे। अहो श्रुतं भवद्भिर्यन्मत्स्यजीवद्भिरभिहितं। तद्रात्रावपि गम्यतां किञ्चिन्निकटं सरः। उक्तं च। अशक्तैर्बलिनः शत्रोः कर्तव्यं प्रपलायनं।
संश्रितव्यो ऽथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥३६२॥

तन्नूनं प्रभातसमये ते मत्स्यजीविनो ऽत्र समागत्य मत्स्यसङ्क्षयं करिष्यन्ति। एतन्मम मनसि वर्तते। तन्नयुक्तं साम्प्रतं क्षणमप्यत्रावस्थातुं। उक्तं च।

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा।
ते न पश्यन्ति विद्वांसो देशभङ्गं कुलक्षयं ॥३६३॥

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह। अहो सत्यमभिहितं भवता। ममाप्यभीष्टमेतत्। तदन्यत्र गम्यतामिति। उक्तं च।

परदेशभयाद्भीता बहुमाया नपुंसकाः।

स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥३६४॥

अन्यच्च । यस्यास्ति सर्वत्र गतिः स कस्मात्
स्वदेशरागेण हि याति नाशं ।
तातस्य कूपो ऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति ॥३६५॥

अथ तत् समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्राह । अहो न भवद्भ्यां मन्त्रितं सम्यगेतदिति । यतः किं वाङ्मात्रेणापि तेषां पितृपैतामहिकमेतत् सरस्त्यक्तुं युज्यते । यद्यायुःक्षयो ऽस्ति तदन्यत्रगतानामपि मृत्युर्भविष्यति । उक्तं च ।

सर्पाणां दुर्जनानां च परच्छिद्रानुजीविनां ।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥३६६॥

तदहं न यास्यामि । भवद्भ्यां च यत् प्रतिभाति तत् कर्तव्यं । अथ तस्य तं निश्चयं ज्ञात्वानागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन । अथ प्रभाते तैर्मत्स्यजीविभिर्जालैस्तज्जलाशयमालोड्य यद्भविष्येन सह तत् सरो निर्मत्स्यतां नीतं । ततो ऽहं ब्रवीमि ।

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥३६७॥

तच्छ्रुत्वा टिट्टिभः आह । भद्रे यन्मां किं यद्भविष्यसदृशं सम्भावयसि । तत् पश्य मे प्रभावं । यदेनं दुष्टबुद्धिं समुद्रं स्वचञ्च्वा शोषयिष्यामि । टिट्टिभी प्राह । अहो कस्ते समुद्रेण सह विग्रहः । तन्नयुक्तमस्योपरि विग्रहं कर्तुं । उक्तं च ।

पुंसामसमर्थानामुपद्रवायात्मनो भवेत् कोपः ।
पिठरं ज्वलदतिमात्रं निजपार्श्वानेव दहति तरां ॥३६८॥
महतस्तु रमा विलङ्घयन् निजदोषेण कुधीर्विनश्यति ।
कुरुते न खलु स्वयेच्छया शलभानिन्धनमिद्धदीधितिः ॥३६९॥

टिट्टिभः प्राह। प्रिये मैवं वद। येषामुत्साहशक्तिर्भवति। ते स्वल्पा अपि गुरून् विक्रमन्ते। उक्तं च।

विशेषात् परिपूर्णस्य यान्ति शत्रोरमर्षिणः।
आभिमुख्यं शशाङ्कस्य यथाद्यापि विधुन्तुदः ॥ ३७० ॥

तथा च। प्रमाणाभ्यधिकस्यापि गण्डश्याममदच्युतेः।
पदं मूर्ध्नि समाधत्ते केशरी मत्तदन्तिनः ॥ ३७१ ॥

अन्यच्च। बालस्यापि रवेः पादाः पतन्त्युपरि भूभृतां।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ ३७२ ॥

तथा च। हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तिमात्रो ऽङ्कुशः।
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः।
वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरिः।
तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥ ३७३ ॥

तदनया चञ्च्वास्य सकलमपि तोयं शुष्कस्थलतां नेष्यामि। टिट्टिभी प्राह। भो कान्त यत्र जाह्नवी नवनदीशतानि गृहित्वा नित्यमेव प्रविशति। तथा सिन्धुश्च। तत् कथं तमष्टादशनदीशतैः पूर्यमाणं विप्रुषवाहिन्या चञ्च्वा शोषयिष्यसि। तत् किमश्रद्धेयेनोक्तेन। टिट्टिभः प्राह। प्रिये

अनिर्वेदः श्रियो मूलं चञ्चुर्मे लोहसन्निभा।
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति ॥ ३७४ ॥

तथा च। दुरधिगमः परभागो यावत् पुरुषेण पौरुषं न कृतं।
जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥ ३७५ ॥

टिट्टिभी प्राह। यदि त्वयावश्यमेव समुद्रेण सह विग्रहानुष्ठानं कार्यं। तदन्यानपि विहङ्गमान् समाहूय सुहृज्जनसहित एवं समाचर। उक्तं च यतः।

बहूनामप्यसाराणां समवायो बलावहः।

तृणैरावेष्ट्यते रज्जुर्येन नागोऽपि बध्यते ॥३७६॥

तथा च। चटकाकाष्ठकूटेन मक्षिकादर्दुरैस्तथा।
महाजनविरोधेन कुञ्जरः प्रलयं गतः ॥३७७॥

कथा ॥१५॥ टिट्टिभः प्राह। कथमेतत्। साब्रवीत्। अस्ति कस्मिंश्चिद्वनोद्देशे चटकदम्पती तमालतरुकृतनीडौ प्रतिवसतः स्म। अथ तयोर्गच्छता कालेन सन्ततिरभवत्। अन्यस्मिन्नहनि प्रमत्तो वनगजः कश्चित् तं तमालवृक्षं घर्मार्त्तश्छायार्थी समाश्रितः। ततो मदोत्कर्षात् तां तस्य शाखां चटकाश्रितां पुष्कराग्रेणाकृष्याभाङ्क्षीत्। तस्या भङ्गेन च टकाण्डानि सर्वाणि विशीर्णानि। आयुःशेषतया च चटकौ कथमपि प्राणैर्नोज्झितौ। अथ चटका स्वाण्डभङ्गाभिभूता प्रलापान् कुर्वाणा न किञ्चित् सुखमाससाद। एतस्मिन्नन्तरे तस्यास्तान् प्रलापान् समाकर्ण्य काष्ठकूटो नाम पक्षी तस्याः परमसुहृत् तद्दुःखदुःखितोऽभ्युपेत्य तामुवाच। भगवति किं वृथाप्रलापेन। उक्तं च यतः।

नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः।
पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥३७८॥

तथा च। अशोच्यानीह भूतानि यो मूढस्तानि शोचति।
स दुःखाल्लभते दुःखं द्वावनर्थौ निषेवते ॥३७९॥

अन्यच्च। श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
तस्मान्न रोदितव्यं हि क्रियाः कार्याश्च शक्तितः ॥३८०॥

चटका प्राह। अस्त्येतत्। परं किमनेन दुष्टगजेन मदान्मे सन्तानस्य क्षयः कृतः। तद्यदि त्वं मम सत्यसुहृत् तदस्य गजापसदस्य किञ्चिद्वधोपायं चिन्तय। यस्यानुष्ठानेन मे सन्ततिविनाशदुःखमपसरति।

उक्तं च। आपदि येनोपकृतं येन च हसितं दशासु विषमासु।
उपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥३८१॥

काष्ठकूट आह। सत्यमभिहितं भवत्या। उक्तं च।

स सुहृद्व्यसने यः स्यादन्यजात्युद्भवो ऽपि सन् ।
वृद्धौ सर्वो ऽपि मित्रं स्यात् सर्वेषामेव देहिनां ॥ ३८२ ॥

तथा च । स सुहृद्व्यसने यः स्यात् स पुत्रो यत्र निर्वृतिः ।
स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ ३८३ ॥

तत् पश्य मे बुद्धिप्रभावं । परं किंतु ममापि सुहृद्भूता वीणारवा नाम मक्षिकास्ति । तत् तामाहूयागच्छामि । येन स दुरात्मा दुष्टगजो बध्यते । अथासौ चटकया सह मक्षिकां समासाद्य प्रोवाच । भद्रे ममेष्टेयं चटका केनचिद्दुष्टगजेन पराभूताण्डकस्फोटनेन । तदस्य बधोपायमनुतिष्ठतो मे साहाय्यं कर्तुमर्हसि । मक्षिकाप्याह । भद्रे किमुच्यते ऽत्र विषये । उक्तं च यतः ।

पुनः प्रत्युपकाराय मित्राणां क्रियते प्रियं ।
यत् पुरा मित्रमित्रस्य कार्यं मित्रैः कृतं न किं ॥ ३८४ ॥

सत्यमेतत् । परं ममापि मेघनादो नाम परमसुहृद्भेको ऽस्ति । तमपि समाहूय यथोचितं कुर्मः । उक्तं च ।

हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः ।
कथंचिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ३८५ ॥

अथ त्रयो ऽपि ते गत्वा मेघनादस्य समीपे समस्तमपि वृत्तान्तं निवेद्य तस्थुः । अथ स प्रोवाच । कियन्मात्रो ऽसौ वराको गजो महाजनस्य कुपितस्याग्रे । तन्मदीयो मन्त्रः कर्तव्यः । मक्षिके त्वं गत्वा मध्याह्नसमये तस्य मदोद्धतस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु । येन निमीलितनयनः श्रवणसुखलालसो भवति । ततश्च काष्ठकूटचञ्च्वा स्फोटितनयनो ऽन्धीभूतस्तृषार्त्तो मम गर्तातटाश्रितस्य सपरिकरस्य शब्दं श्रुत्वा जलाशयं मत्वा समभ्येति । ततो गर्तामासाद्य पतति पञ्चत्वं याति च । एवं समवायात् कर्तव्यं यथा वैरसाधनं भवति । अथ तथानुष्ठिते स मत्तगजो मक्षिकागेयसुखान्निमीलितनेत्रः काष्ठकूटापहृ

तचक्षुर्मध्यन्दिनसमये तृषार्त्तो भ्राम्यन् मण्डूकशब्दानुसारी गच्छन् महतीं गर्तामासाद्य पतितो मृतश्च। अतो ऽहं ब्रवीमि।

चटककाष्ठकूटेन मक्षिकादर्दुरैस्तथा।
महाजनविरोधेन कुञ्जरः प्रलयं गतः ॥३८६॥

टिट्टिभ आह। भद्रे एवं भवतु। सुहृद्वर्गसमुदायेन समुद्रं शोषयिष्यामि। इति निश्चित्य वकसारसहंसमयूरादीन् सर्वान् विहङ्गमान् समाहूय प्रोवाच। भो पराभूतो ऽहं समुद्रेणाण्डकापहरणेन। तच्चिन्त्यतामस्य शोषणोपायः। अथ ते सर्वे सम्मन्त्र्य प्रोचुः। अशक्ता वयं समुद्रशोषणे। तत् किं वृथाप्रयासेन। उक्तं च।

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः।
युद्धार्थं स निवर्तेत शीर्णदन्तो यथा गजः ॥३८७॥

तदस्माकं स्वामी वैनतेयो ऽस्ति। ततस्तस्मै सर्वमेतत् परिभवस्थानं निवेद्यतामिति। येन स्वजातिपरिभवकुपितो वैरागयं गच्छति। अथ वात्रावलेपं करिष्यति। तथापि नास्ति दोषः। उक्तं च यतः।

सुहृदि निरन्तरचित्ते गुणवति भृत्ये ऽनुवर्तिनि कलत्रे।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति ॥३८८॥

तथानुष्ठिते सर्वे ते पक्षिणो विषण्णवदना वाष्पपूरितदृशः करुणास्वरेण वैनतेयमासाद्य फूत्कर्तुमारब्धाः। अहो अब्रह्मण्यमब्रह्मण्यं। अधुना सदाचारस्य टिट्टिभस्य भवति नाथे ऽपि सति समुद्रेणाण्डकान्यपहृतानि। तत् प्रनष्टमधुना पक्षिकुलं। अन्ये ऽपि स्वेच्छया समुद्रवध्यापादयिष्यन्ति। उक्तं च।

एकस्य कर्म संवीक्ष्य करोत्यन्यो ऽपि गर्हितं।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥३८९॥

तथा च। चाटतस्करदुर्वृत्तमहासाहसिकादिभिः।
पीड्यमानाः प्रजा रक्ष्याः कूटछद्मादिभिस्तथा ॥३९०॥

अन्यच्च। प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥ ३११॥
प्रजापीडनसन्तापात् समुद्भूतो हुताशनः।
राज्ञः श्रियं कुलं प्राणानादग्ध्वा विनिवर्तते ॥ ३१२॥
राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषां।
राजा पिता च माता च सर्वेषां न्यायवर्तिनां ॥ ३१३॥
फलार्थी पार्थिवो लोकान् पालयेद्यत्नमास्थितः।
दानमानादितोयेन मालाकारो ऽङ्कुरानिव ॥ ३१४॥
यथा वीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः।
फलप्रदो भवेत् काले तथा लोको ऽपि रक्षितः ॥ ३१५॥
हिरण्यं धान्यरत्नानि यानानि विविधानि च।
तथान्यदपि यत् किञ्चित् प्रजाभ्यः स्यान्नृपस्य तत् ॥ ३१६॥

अथैवं गरुडः समाकर्ण्य टिट्टिभदुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत्। अहो सत्यमुक्तमेतैः पक्षिभिः। तदद्य गत्वा तं समुद्रं शोषयिष्यामः। एवं विचिन्तयतस्तस्य विष्णुदूतः समागत्य प्रोवाच। भो गरुत्मन् भगवता नारायणेनाहं तव पार्श्वे प्रेषितः देवकार्याय भगवानमरावत्यां यास्यतीति। तत् सत्वरमागम्यतां। तच्छ्रुत्वा गरुडः साभिमानं तमाह। भो दूत किं मया कुभृत्येन भगवान् करिष्यति। तद्गत्वा तं वद। अन्यो भृत्यो वाहनायास्मत्स्थाने क्रियतां। मदीयो नमस्कारो वाच्यो भगवतः। दूत आह। भो वैनतेय कदाचिद्भगवन्तं प्रति त्वया नैतदभिहितमीदृक्। तत् कथय किं ते भगवतो ऽपमानं कृतं। गरुड आह। भगवदाश्रयभूतेन समुद्रेणास्मद्भृत्यस्य टिट्टिभस्याण्डकान्यपहृतानि। तद्यदि तस्य निग्रहं न करोति। तदहं भगवतो न भृत्य इत्येष मे निश्चयस्त्वया वाच्यः। तद्द्रुततरं भवता भगवतः समीपे गन्तव्यं। अथ दूतमुखेन वैनतेयं प्रणयकुपितं विज्ञाय भगवां

श्चिन्तयामास। स्थाने कोपो वैनतेयस्य। तत् स्वयमेव गत्वा तं सम्बोध्य सम्मानपुरस्सरमानयामि। उक्तं च।

भक्तं शक्तं कुलीनं च न भृत्यमपमानयेत्।
पुत्रवल्लालयेन्नित्यं य इच्छेच्छ्रियमात्मनः ॥३९७॥

अन्यच्च। राज्ञा तुष्टो ऽपि भृत्यानां मानमात्रं प्रयच्छति।
ते तु सम्मानितास्तस्य प्राणैरप्युपकुर्वते ॥३९८॥

इत्येवं सम्प्रधार्य रुक्मपुरे वैनतेयसकाशं सत्वरमगमत्। वैनतेयो ऽपि गृहायागतं भगवन्तमवलोक्य त्रपादधोमुखः प्रणम्योवाच। भगवंस्त्वदाश्रयोन्मत्तेन समुद्रेण पश्य मे भृत्यस्याण्डकान्यपहृत्य ममापमानं विहितं। तद्भगवल्लज्जया मया विलम्बितं। नो चेदेनमहं स्थलान्तमद्यैव नयामि। उक्तं च यतः।

येन स्याल्लघुता वाथ पीडा चित्ते प्रभोः क्वचित्।
प्राणत्यागे ऽपि तत् कर्म न कुर्यात् कुलसेवकः ॥३९९॥

तच्छ्रुत्वा भगवानाह। भो वैनतेय सत्यमभिहितं भवता। उक्तं च यतः।

भृत्यापराधजो दण्डः स्वामिनो जायते यतः।
येन लज्जापि तस्योत्था न भृत्यस्य तथा पुनः ॥४००॥

तदागच्छ येनाण्डानि समुद्रादादाय टिट्टिभं सम्भावयामः। अमरपुरीं च गच्छामः। तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्य धनुष्याग्नेयं शरं सन्धायाभिहितः। भो दुरात्मन् दीयतां टिट्टिभस्याण्डानि। नो चेत् त्वां स्थलतां नेष्यामि। ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि दत्तानि। टिट्टिभेनापि स्वभार्यार्पितानि। अतो ऽहं ब्रवीमि।

शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः।
स पराभवमाप्नोति समुद्रष्टिट्टिभाद्यथा ॥४०१॥

तदाकर्ण्य सञ्जीवकस्तमेव भूयो ऽपि पप्रच्छ। भो मित्र कथं ज्ञेयो ऽसौ मया दुष्टबुद्धिरिति। इयन्तं कालं यावदुत्तरोत्तरस्नेहेन प्रसादेन च

तेनाहं दृष्टः। न कदाचित् तद्विकृतिर्दृष्टा। तत् कथ्यतां येनाहमात्मरक्षार्थं तद्वधायोद्यमं करोमि। दमनक आह। भद्र किमत्र ज्ञेयं। एष ते प्रत्ययः। रक्तनेत्रस्त्रिशिखां भृकुटिं दधानः सृक्कणी परिलेलिहं स्त्वां दृष्ट्वा यदि भविष्यति। तदा दुष्टबुद्धिः। अन्यथा सप्रसादश्चेति। तदा ज्ञापय मां। स्वाश्रयं प्रतिगच्छामि। त्वया च यथा मन्त्रभेदो न भवति तथा विधातव्यं। यति निशामुखं प्राप्य गन्तुं शक्नोषि। तदा देशत्यागः कार्यः। तथात्मा सामभेदोपप्रदानदण्डादिभी रक्षणीयः। उक्तं च यतः।

अपि पुत्रकलत्रैर्वा प्राणान् रक्षेत पण्डितः।
विद्यमानैर्यतस्तैः स्यात् सर्वं भूयो ऽपि देहिनां ॥४०२॥

तथा च। येन केनाप्युपायेन शुभेनाप्यशुभेन वा।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥४०३॥
यो मायां कुरुते मूढः प्राणत्यागे धनादिषु।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत् ॥४०४॥

एवमभिधाय दमनकः करटकपार्श्वमगमत्। करटको ऽपि तं दृष्ट्वा प्रोवाच। भद्र किं कृतं त्वया तत्र गतेन। दमनक आह। मया तावन्नीतिवीजनिर्वापणं कृतं। परतस्तद्दैवपर्यायायत्तं। उक्तं च।

पराङ्मुखे ऽपि दैवे ऽत्र कृत्यं कार्यं विपश्चिता।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च ॥४०५॥

करटक आह। तत् कथय त्वया कीदृक् नीतिवीजं निर्वापितं। सो ऽब्रवीत्। मयान्योन्यं ताभ्यां मिथ्याप्रजल्पनेन भेदस्तथा विहितो यथा भूयो मन्त्रयन्तावेकस्थानस्थितौ न द्रक्ष्यसि। करटक आह। अहो न युक्तं भवता विहितं। यतः परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ कोपसागरे प्रक्षिप्तौ। उक्तं च।

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत्।

जन्मजन्मान्तरे दुःखी स नरः स्यादसंशयं ॥४०६॥

अपरं च यत् त्वं भेदमात्रेणापि तुष्टः। तदप्ययुक्तं। यतः सर्वो ऽपि जनो विरूपकरणे समर्थो भवति नोपकरणे। उक्तं च।

नाशयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुं।
पातयितुमस्ति शक्तिर्वायोर्वृक्षं न चोन्नमितुं ॥४०७॥

दमनक आह। भो अनभिज्ञो भवान् नीतिशास्त्रस्य। तेनैतद्ब्रवीषि। उक्तं च। उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥४०८॥

तच्छत्रुभूतो ऽयमस्माकं मन्त्रिपदापहरणात्। उक्तं च।

पितृपैतामहं स्थानं यो यस्यात्र जिगीषते।
स तस्य सहजः शत्रुरुच्छेद्यो ऽपि प्रिये स्थितः ॥४०९॥

तन्मया स उदासीनतया समानीतो ऽभयप्रदानेन यावत्। तावदहमपि तेन साचिव्यपदात् प्रच्यावितः। अथवा साध्विदमुच्यते।

दद्यात् साधुर्यदि निजपदे दुर्जनाय प्रवेशं।
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः।
तस्माद्देयो विपुलमतिभिर्नावकाशो ऽधमानां।
जारो ऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतो ऽत्र ॥४१०॥

तेन मया तस्योपरि बधोपाय एष विरचितः। येन देशत्यागो मृत्युर्वा भविष्यति। तच्च त्वामुक्त्वान्यो न ज्ञास्यति। तन्मया युक्तमेतत् स्वार्थाय प्रतिष्ठितं। उक्तं च यतः।

निस्त्रिंशं हृदयं कृत्वा वाणी चेक्षुरसोपमा।
विकल्पो ऽत्र न कर्तव्यो हन्यात तत्रापकारिणं ॥४११॥

अपरं विहतो ऽप्येष सञ्जीवको ऽस्माकमुपभोग्यो भविष्यति। तदेकं तावद्वैरसाधनं। अपरं साचिव्यं भविष्यति तृप्तिश्चेति। तद्गुणत्रये ऽस्मिन्नुपस्थिते कस्मान्मां दूषयसि जाड्यभावात्। उक्तं च यतः।

परस्य पीडनं कुर्वन् स्वार्थसिद्धिं च पण्डितः ।
मूढबुद्धिर्न भक्षेत वने चतुरको यथा ॥४१२॥

करटक आह । कथमेतत् । सो ऽब्रवीत् । अस्ति कस्मिंश्चिद्वनो देशे वज्रदंष्ट्रो नाम सिंहः । तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ भृत्यभूतौ सदैवानुगतौ तत्रैव वने प्रतिवसतः । अथान्यदिने सिंहेन कदाचिदासन्नप्रसवा प्रसववेदनया स्वयूथाद्भ्रष्टोष्ट्रयुपविष्टा कस्मिंश्चिद्वनगहने समासादिता । अथ तां व्यापाद्य यावदुदरं स्फोटयति तावज्जीवल्लघुर्दासेरकशिशुर्निःक्रान्तः । सिंहो ऽपि दासेरक्याः पिशितेन परां तृप्तिमुपागतः । परं स्नेहाद्बालदासेरकं त्यक्तं गृहमानीय तमुवाच । भद्र न ते ऽस्ति मृत्योर्भयं मत्तो नान्यस्मादपि । ततः स्वेच्छयात्र वने चतुरकक्रव्यमुखाभ्यां लालितेन भ्राम्यतामिति । यतस्ते शङ्कुसदृशौ कर्णौ ततः शङ्कुकर्णो नाम भविष्यति । एवमनुष्ठिते चत्वारो ऽपि त एकस्थानविहारिणः परस्परमनेकप्रकारं गोष्ठीसुखमनुभवन्तस्तिष्ठन्ति । शङ्कुकर्णो ऽपि यौवनपदवीमारूढः क्षणमपि न तं सिंहं मुञ्चति । अथ कदाचिद्वज्रदंष्ट्रस्य मत्तगजेन सह युद्धमभवत् । तेन मदवीर्यात् स दन्तप्रहारैस्तथा क्षतशरीरो विहितो यथा कथञ्चिन्न दैवाद्व्यापादितः । ततश्च प्रहारजर्जरितदेहो यदा स प्रचलितुं न शक्नोति । तदा क्षुत्क्षामकण्ठस्तान् भृत्यानुवाच । भो अन्विष्यतां किञ्चित् सत्त्वं येनाहमेवं स्थितो ऽपि तद्व्यापाद्यात्मनो युष्माकं च क्षुत्प्रणाशं करोमि । तच्छ्रुत्वा ते त्रयो ऽपि तत्रैव वने सन्ध्याकालं यावत् परिभ्रान्ताः । परं न किञ्चिदपि सत्त्वं समासादितं । अथ चतुरकश्चिन्तयामास । यदि शङ्कुकर्णो ऽयं व्यापाद्यते तदा सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति । परं नैनं स्वामी मित्रवादाश्रयसमाश्रितत्वाच्च विनाशयिष्यति । अथ बुद्धिप्रभावेन स्वामिनं प्रतिबोध्य तथा करिष्ये यथा व्यापादयिष्यति । उक्तं च ।

कथा ॥१६॥

अबध्यं वाथवागम्यमकृत्यं नास्ति किञ्चन ।
लोके बुद्धिमतां बुद्धेस्तस्मात् तां हि नियोजयेत् ॥४१३॥

एवं विचिन्त्य शङ्कुकर्णमिदमाह । भो शङ्कुकर्ण स्वामी तावत् पथ्यं विना क्षुधया परिपीड्यते । स्वाम्यभावादस्माकमपि स्वयं विनाशः समायातः । ततो वाक्यं किञ्चित् स्वाम्यर्थं वदिष्यामि । तच्छ्रूयतां । भो भद्र शीघ्रतरं निवेदय । येन ते वचनमविकल्पः करोमि । अपरं स्वामिनो हिते कृते मया सुकृतशतं कृतं भविष्यति । चतुरक आह । भो भद्र आत्मीयशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ । येन ते द्विगुणं शरीरं भवति । स्वामिनः पुनः प्राणयात्रा भवति । तदाकर्ण्य शङ्कुकर्णः प्राह । भद्र यद्येवं तदा मदीयमेवेदं प्रयोजनं । तदुच्यतां स्वाम्येतदेव क्रियतामिति । परमत्र विषये धर्मप्रतिभूर्याचनीयः । एवं निश्चित्य सर्वे ते सिंहसकाशमाजग्मुः । ततश्चतुरक आह । देव किञ्चित् सत्त्वं प्राप्तमद्य । भगवानादित्यो ऽप्यस्तं गतः । तद्यदि द्विगुणवृद्ध्यास्य शङ्कुकर्णस्य शरीरं प्रयच्छसि धर्मप्रतिभुवा । तदासौ स्वशरीरं ददाति । सिंह आह । यद्येवं तदा सुन्दरतरं । अस्य व्यवहारस्य धर्मप्रतिभूः क्रियतां । अथ सिंहवचनानन्तरं वृकसृगालाभ्यां विदारितकुक्षिः शङ्कुकर्णः पञ्चत्वमुपागतः । अथ वज्रदंष्ट्रश्चतुरकमाह । भो चतुरक यावदहं नदीं गत्वा स्नानदेवतार्चनविधिं निर्वर्त्यागच्छामि । तावत् त्वयात्राप्रमत्तेन भाव्यं । इत्युक्त्वा नद्यां गतः । अथ तस्मिन् गते चतुरकश्चिन्तयामास । कथं ममैकाकिनो भोज्यो ऽयमुष्ट्रो भविष्यति । इति विचिन्त्य क्रव्यमुखमाह । भो क्रव्यमुख क्षुधालुर्भवान् । तद्यावदसौ स्वामी नागच्छति । तावत् त्वमस्योष्ट्रस्य मांसं भक्षय । अहं त्वां स्वामिनो ऽग्रे निर्दोषं प्रतिपादयिष्यामि । सो ऽपि तच्छ्रुत्वा किञ्चिन्मांसं यावदास्वादयति । तावच्चतुरकेनाभिहितं । भो भो क्रव्यमुख समागच्छति स्वामी । तत् त्यक्त्वैनं दूरे तिष्ठ येनास्य भक्षणं न

विकल्पयति। तथानुष्ठिते सिंहः समायातः। यावदुष्ट्रं पश्यति तावद्रिक्तीकृतहृदयो दासेरकः। ततो भृकुटीं कृत्वा परुषतरमिदमाह। अहो केनैष उष्ट्र उच्छिष्टतां नीतः। येन तमपि व्यापादयामि। एवमभिहिते क्रव्यमुखश्चतुरकमुखमवलोकयति। किल वद किञ्चिद्येन मम शान्तिर्भवति। अथ चतुरको विहस्योवाच। भो ममाग्रे ऽपि क्रमेलकहृदयं भक्षयित्वा। अधुना मम मुखमवलोकयसि। तदास्वादयास्य दुर्णयतरोः फलमिति। तदाकर्ण्य क्रव्यमुखः प्राणभयाद्देशान्तरमनागमनाय गतः। सिंहश्च तत्रैव तिष्ठति। एतस्मिन्नन्तरे दैवयोगात् तेनैव मार्गेण महादासेरकसार्थो भाराक्रान्तः समागच्छति। तस्याग्रेसरस्योष्ट्रस्य कण्ठे महती घण्टा प्रबद्धास्ते। तस्याः शब्दं दूरतो ऽपि समाकर्ण्य सिंहश्चतुरकमाह। भद्र ज्ञायतां किमेष रौद्रः शब्दः श्रूयते ऽश्रुतपूर्वः। तच्छ्रुत्वा चतुरकः किञ्चिद्वनान्तरं गत्वा। सत्वरं तमभ्येत्य सवेगमुवाच। स्वामिन् गम्यतां गम्यतां यदि शक्नोषि गन्तुं। सो ऽब्रवीत्। भद्र किमेवं मां व्याकुलयसि। तत् कथय। किमेतदिति। चतुरक आह। स्वामिन्नेष धर्मराजस्तवोपरि कुपितः। यत् किलानेन मदीयदासेरको मां प्रतिभुवं दत्वाकाल एव व्यापादितः। तत् सहस्रगुणमात्मीयमुष्ट्रमस्य सकाशाद्ग्रहीष्यामि। इति निश्चित्य वृहदुष्ट्रमानमादायाग्रेसरोष्ट्रस्य ग्रीवायां बद्ध्वा। बध्यदासेरकसक्तानपि पितृपितामहानादाय वैरनिर्यातनार्थमायात एव। सिंहो ऽपि तत् सर्वं दूरादेवावलोक्य मृतमुष्ट्रं परित्यज्य स्वप्राणभयात् प्रणष्टः। चतुरको ऽपि शनैः शनैस्तस्योष्ट्रस्य मांसं भक्षयामास। ततो ऽहं ब्रवीमि।

परस्य पीडनं कुर्वन् स्वार्थसिद्धिं च पण्डितः।
मूढबुद्धिर्न भक्षेत वने चतुरको यथा ॥४१४॥

अथ गते दमनके सञ्जीवकश्चिन्तयामास। अहो किमेतन्मया कृतं। यच्छष्पभोजिना मांसाशिना सह मैत्र्यनुग्रहः कृतः। अथवा साधु

चेदमुच्यते ।

अगम्यानि पुमान् याति यो ऽसेव्यांश्च निषेवते ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥४१५॥

तत् किं करोमि । क्व गच्छामि । कथं मे शान्तिर्भविष्यति । अथवा तमेव पिङ्गलकमनुगच्छामि । कदाचिच्छरणागतं मां रक्षति । प्राणैर्न वियोजयति । उक्तं च यतः ।

धर्मार्थं यततामपीह विपदो दैवाद्यदि स्युः क्वचित् ।
तत् तासामुपशान्तये सुमतिभिः कार्यो विशेषान्नयः ।
लोके ख्यातिमुपागतात्र सकले लोकोक्तिरेषा यतः ।
दग्धानां किल वह्निना हितकरः सेको ऽपि तस्योद्भवः ॥४१६॥

तथा च । लोके ऽथवा तनुभृतां निजकर्मपाकं ।
नित्यं समाश्रितवतां सुहितक्रियाणां ।
भावार्जितं शुभमथाप्यशुभं निकामं ।
यद्भावि तद्भवति नात्र विचारहेतुः ॥४१७॥

अपरं चान्यत्रगतस्यापि मे कस्यचिद्दुष्टसत्त्वस्य मांसाशिनः सकाशान्मृत्युर्भविष्यति । तद्वरं सिंहात् । उक्तं च ।

महद्भिः स्पर्द्धमानस्य विपदेव गरीयसी ।
दन्तभङ्गो हि नागानां श्लाघ्यो गिरिविदारणे ॥४१८॥

तथा च । महतो ऽपि क्षयं लब्ध्वा श्लाघ्यं नीचो ऽपि गच्छति ।
दानार्थी मधुपो यद्वद्गजकर्णसमाहतः ॥४१९॥

एवं निश्चित्य स स्खलितगतिर्मन्दं मन्दं गत्वा सिंहाश्रयं पश्यन्नपठत् । अहो साधु चेदमुच्यते ।

अन्तर्लीनभुजङ्गमं गृहमिव व्यालाकुलं वा वनं ।
ग्राहाकीर्णमिवाभिरामकमलच्छायासनाथं सरः ।
नानादुष्टजनैरसत्यवचनैः क्षुद्रैरनार्यैर्वृतं ।

दुःखेनेह.विगाह्यते प्रचकितैराज्ञां गृहं वार्द्धिवत् ॥४२०॥

एवं पठन् दमनकोक्ताकारं दृष्ट्वा तं पिङ्गलकं स चकितः संवृतशरीरो दूरतरं प्रणामकृतिं विनाप्युपविष्टः । पिङ्गलको ऽपि तथाविधं विलोक्य दमनकवाक्यं श्रद्दधानः कोपात् तस्योपरि पपात । अथ सञ्जीवकस्तु पिङ्गलकखरनखरविकर्तितशरीरः पृष्ठशृङ्गाभ्यां तदुदरमुल्लिख्य कथमपि तस्मादपेतः । पुनरपि शृङ्गाभ्यां तं हन्तुमिच्छन् युद्धायावस्थितः । अथ द्वावपि तौ पुष्पितपलाशप्रतिमौ परस्परबधकाङ्क्षिणौ दृष्ट्वा करटकः साक्षेपं दमनकमुवाच । भो मूढमते यदनयोर्विरोधस्त्वया कृतः । तन्न साधु विहितं । यतः सकलमपि वनमिदं व्याकुलीकृतं भवता । तत् त्वं न नीतितत्त्वं वेत्सि । उक्तं च नीतिविद्भिः ।

कार्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये ।
प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः ।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमैः ।
तेषां दुर्णयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलां ॥४२१॥

तद्यदि स्वाम्यभिघातो भविष्यति । तत् किं त्वदीयमन्त्रबुद्ध्या क्रियते । अथ सञ्जीवको न बध्यते । तथाप्यभव्यं । यतः प्राणसन्देहात् तस्य च बधः । तन्मूढ कथं त्वं मन्त्रिपदवीमभिलषसि । सामसिद्धिं न वेत्सि । तद्वृथा मनोरथो ऽयं ते दण्डरुचेः । उक्तं च ।

सामादिदण्डपर्यन्तो नयः प्रोक्तः स्वयम्भुवा ।
तेषां दण्डस्तु पापीयांस्तस्माद्दण्डं विवर्जयेत् ॥४२२॥

तथा च । साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति को ऽर्थः पटोलेन ॥४२३॥

तथा च । साम्नैवादौ प्रयोक्तव्यं कार्यं कार्यविचक्षणैः ।
सामसिद्धा हि विधयो न प्रयान्ति पराभवं ॥४२४॥

अन्यच्च । न चन्द्रेण न चौषध्या न सूर्येण न वह्निना ।

साम्नैव विलयं याति विद्वेषि प्रभवं तमः ॥४२५॥

तद्यत् त्वं मन्त्रित्वमभिलषसि। तदप्ययुक्तं। यतस्त्वं मन्त्रिगतिं न वेत्सि। यतः पञ्चविधो मन्त्रः। स च कर्मणामारम्भोपायः। पुरुषद्रव्यसम्पत्। देशकालविभागः। विनिपातप्रतीकारः। कार्यसिद्धिश्चेति। सो ऽयं स्वाम्यमात्ययोरेकतमस्य किं वा द्वयोरपि विनिपातः सम्पद्यते लग्नं। तद्यदि काचिच्छक्तिरस्ति। तद्विचिन्त्यतां विनिपातप्रतीकारः। भिन्नसन्धाने हि मन्त्रिणां बुद्धिपरीक्षा। तन्मूर्ख तत् कर्तुमसमर्थस्त्वं यतो विपरीतबुद्धिरसि। उक्तं च।

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुं।
पातयितुमस्ति शक्तिर्नाखोरुद्धर्तुमुत्त्रिपदं ॥४२६॥

अथवा न ते दोषो ऽयं स्वामिनो दोषो यस्ते मन्दमतेर्वाक्यं श्रद्दधाति। उक्तं च।

नराधिपा नीचजनानुवर्त्तिनो बुधोपदिष्टेन पथा न यान्ति ये।
विशन्ति ते दुर्गममार्गनिर्गमं समस्तसम्बाधनमर्थपञ्जरं ॥४२७॥

तद्यदि त्वमस्य मन्त्री भविष्यसि। तदान्यो ऽपि कश्चिन्नास्य समीपे साधुजनः समेष्यति। उक्तं च।

गुणालयो ऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥४२८॥

तथा च शिष्टरहितस्य स्वामिनो ऽपि नाशो भविष्यति। उक्तं च।

चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः।
ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥४२९॥

तत् किं ते मूर्खस्योपदेशेन। केवलं दोषो न गुणः। उक्तं च।

नानाम्यं नाम्यते दारु नाश्मनि स्यात् क्षुरक्रिया।
सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते ॥४३०॥

दमनक आह। कथमेतत्। करटको ऽब्रवीत्। अस्ति कस्मिंश्चित्

पर्वतैकदेशे वानरयूथं। तच्च कदाचिद्धेमन्तसमये ऽतिकठोरवातसंस्पर्शवेपमानकलेवरं तुषारवर्षोद्धतप्रवर्षघनधारानिपातसमाहतं न कथञ्चिच्छान्तिमगमत्। ॥१७॥ अथ केचिद्वानरा वह्निकणसदृशानि गुञ्जाफलान्यवचित्य वह्निवाञ्छया फूत्कुर्वन्तः समन्तात् तस्थुः। अथ सूचीमुखो नाम पक्षी तेषां तं वृथायासमवलोक्य प्रोवाच। भो सर्वे मूर्खा यूयं। नैते वह्निकणाः। गुञ्जाफलान्येतानि। तत् किं वृथाश्रमेण। नैतस्माच्छीतरक्षा भविष्यति। तदन्विष्यतां कश्चिन्निर्वातो वनप्रदेशः। गुहा वा गिरिकन्दरं वा। अद्यापि साटोपा मेघा दृश्यन्ते। अथ तेषामेकतमो वृद्धवानरस्तमुवाच। भो मूर्ख किं तवानेन व्यापारेण। तन्मौनेन स्थीयतां। उक्तं च।

मुहुर्विघ्नितकर्माणं द्यूतकारं पराजितं।
नालापयेद्विवेकज्ञो यदीच्छेत् सिद्धिमात्मनः ॥४३१॥

तथा च। आखेटकं वृथाक्लेशं मूर्खं व्यसनसंस्थितं।
आलापयति यो मूढः स गच्छति पराभवं ॥४३२॥

सो ऽपि तमनादृत्य भूयो ऽपि वानराननवरतमाह। भो किं वृथा क्लेशेन। अथ यावदसौ न कथञ्चित् प्रलपन् विरमति। तावदेकेन वानरेण व्यर्थश्रमत्वात् कुपितेन पक्षाभ्यां गृहीत्वा शिलायामास्फालितः। उपरतश्च। अतो ऽहं ब्रवीमि।

नानाम्यं नाम्यते दारु नाश्मनि स्यात् क्षुरक्रिया।
सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते ॥४३३॥

तथा च। उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये।
पयः पानं भुजङ्गानां केवलं विषवर्द्धनं ॥४३४॥

अन्यच्च। उपदेशो न दातव्यो यादृशे तादृशे जने।
पश्य वानरमूर्खेण सुगृही निर्गृही कृता ॥४३५॥

दमनक आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चिद्वनो

कथा देशे शमीवृक्षः। तस्य लम्बमानशिखायां कृतावासावरण्यचटकदम्पती
॥१८॥ वसतः स्म। अथ कदाचित् तयोः सुखसंस्थयोर्हेमन्तमेघो मन्दं मन्दं वर्षितुमारब्धः। अत्रान्तरे कश्चिच्छाखामृगो वातासारसमाहतः प्रोद्धूषितशरीरो दन्तवीणां वादयन् वेपमानस्तच्छमीमूलमासाद्योपविष्टः। अथ तं तादृशमवलोक्य चटका प्राह। भो भद्र।

हस्तपादसमोपेतो दृश्यसे पुरुषाकृतिः।
शीतेन भिद्यसे मूढ कस्मान्न कुरुषे गृहं ॥४३६॥

एतच्छ्रुत्वा तां वानरः सकोपमाह। अधमे कस्मान्न त्वं मौनव्रता भवसि। अहो धार्ष्ट्यमस्याः। गृहमासाद्य मामुपहसति। यतः।

सूचीमुखी दुराचारा रण्डा पण्डितवादिनी।
नाशङ्कते प्रजल्पन्ती तत् किमेनां न हन्म्यहं ॥४३७॥

एवं प्रलप्य तामाह। मुग्धे किं तव ममोपरि चिन्तया। उक्तं च।

वाच्यं श्रद्धासमेतस्य पृच्छतो ऽत्र विवेकिना।
प्रोक्तं पृच्छाविहीने स्यादरण्यरुदितोपमं ॥४३८॥

तत् किं बहुना। तावत् स कीशो तया निजकुलायगर्वितयाभिहितो यावत् तां शमीमारुह्य तस्याः कुलायः शतधा खण्डशः कृतः। अतो ऽहं ब्रवीमि।

उपदेशो न दातव्यो यादृशे तादृशे जने।
पश्य वानरमूर्खेण सुगृही निर्गृही कृता ॥४३९॥

तन्मूर्ख गुरुभिः शिक्षितो ऽपि न शिष्यसे त्वं। अथवा न ते दोषो ऽस्ति। यतः साधोः शिक्षा गुणाय सम्पद्यते नासाधोः। उक्तं च।

किं करोत्येव पाण्डित्यमस्थाने विनियोजितं।
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः ॥४४०॥

तत् त्वं व्यर्थपाण्डित्यमाश्रित्य मम वचनमशृणवान आत्मशान्तिमपि न वेत्सि। तन्नूनमपजातस्त्वं। उक्तं च।

ज्ञातः पुत्रो ऽनुज्ञातश्च अतिज्ञातस्तथैव च।
अपज्ञातश्च लोके ऽस्मिन् मन्तव्याः शास्त्रवेदिभिः ॥४४१॥
मातृतुल्यगुणो ज्ञातस्त्वनुज्ञातः पितुः समः।
अतिज्ञातो ऽधिकस्तस्मादपज्ञातो ऽधमाधमः ॥४४२॥

उक्तं च। रामो हेममृगं न वेत्ति। अपि च।

अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः।
प्रायो मस्तकनाशे समरमुखे नटति कबन्धः ॥४४३॥

अहो साधिदमुच्यते।

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम।
पुत्रेण व्यर्थपाण्डित्यात् पिता धूमेन घातितः ॥४४४॥

दमनक आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चिदधिष्ठाने धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित् ॥११॥ पापबुद्धिना चिन्तितं। अहं तावन्मूर्खो दारिद्र्योपहतश्च। तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वा। अस्याश्रयेणार्थोपार्जनं कृत्वा। एनमपि वञ्चयित्वा सुखी भवामि। अन्यस्मिन्नहनि स धर्मबुद्धिं प्राह। भो मित्र वार्द्धकाभावे किं त्वमात्मविचेष्टितं स्मरसि। देशान्तरमदृष्ट्वा कां शिशुजनस्य वार्तां कथयिष्यसि। उक्तं च।

देशान्तरेषु बहुविधभाषावेषादि येन न ज्ञातं।
भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थं ॥४४५॥

तथा च। विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक्।
यावद्भ्रमति न भूमौ देशाद्देशान्तरं हृष्टः ॥४४६॥

अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनाभ्यनुज्ञातः शुभे ऽहनि देशान्तरं प्रस्थितः। तत्र धर्मबुद्धिप्रभावेन भ्रमता पापबुद्धिनापि प्रभूततरं वित्तमासादितं। ततश्च द्वावपि तौ प्रभूतोपार्जितद्रव्यौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन निवृत्तौ। उक्तं च यतः।

प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनां ।
क्रोशमात्रो ऽपि भूभागः शतयोजनवद्भवेत् ॥४४७॥

अथ स्वस्थानसमीपवर्त्तिना पापबुद्धिना धर्मबुद्धिरभिहितः । भद्र न सर्वमेतद्वित्तं गृहं प्रतिनेतुं युज्यते । यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ति । तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावः । भूयो ऽपि प्रयोजने सञ्जाते तन्मात्रं समेत्यास्मात् स्थानान्नेष्यावः । उक्तं च ।

न वित्तं दर्शयेत् प्राज्ञः कस्यचित् स्वल्पमप्यहो ।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥४४८॥

तथा च । यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥४४९॥

तदाकर्ण्य धर्मबुद्धिराह । भद्र तर्ह्येवं क्रियतां । तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन संस्थितवन्तौ । अथान्यस्मिन्नहनि पापबुद्धिर्निशीथे ऽटव्यां गत्वा तत् सर्वं वित्तं समादाय गर्तां पूरयित्वा स्वभवनं जगाम । अथान्येद्युर्धर्मबुद्धिं समभ्येत्य प्रोवाच । सखे बहुकुटुम्बावावां । वित्ताभावात् सीदावः । तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयावः । सो ऽब्रवीत् । भद्र एवं क्रियतां । अथ द्वावपि तत् स्थानं यावत् खनतस्तावद्रिक्तं माण्डं दृष्टवन्तौ । अत्रान्तरे पापबुद्धिरात्मशिरस्ताडयन् प्रोवाच । भो धर्मबुद्धे त्वया हृतमेव तद्धनं नान्येन । यतो भूयो ऽपि गर्तापूरणं कृतं । तत् प्रयच्छ मे तस्यार्द्धं । अथाहं राजकुले निवेदयिष्यामि । स आह । भो दुरात्मन् । मैवं वद । धर्मबुद्धिः खल्वहं । नैतच्चौरकर्म करोमि । उक्तं च ।

मातृवत् परदाराणि परद्रव्याणि लोष्टवत् ।
आत्मवत् सर्वभूतानि वीक्षन्ते धर्मबुद्धयः ॥४५०॥

एवं द्वावपि तौ विवादमानौ धर्माधिकरणं गतौ । प्रोचतुश्च परस्परं

दूषयन्तौ। अथ धर्माधिकरणाधिष्ठितपुरुषैर्दिव्यार्थं यावन्नियोजितौ तावत् पापबुद्धिराह। अहो न सम्यग्दृष्टो ऽयं न्यायः। उक्तं च।

विवादे ऽन्विष्यते पत्रं तदभावे ऽपि साक्षिणः।
साक्ष्यभावात् ततो दिव्यं प्रवदन्ति मनीषिणः ॥४५१॥

तदत्र विषये मम वृक्षदेवता साक्षिभूता तिष्ठति। साप्यावयोरेकतरं चौरं वा साधुं करिष्यति। अथ तैः सर्वैरभिहितं। भो युक्तमुक्तं भवता। उक्तं च यतः।

अन्त्यजो ऽपि यदा साक्षी विवादे सम्प्रजायते।
न तत्र युज्यते दिव्यं किं पुनर्यत्र देवता ॥४५२॥

तदस्माकमप्यत्र विषये महत् कुतूहलं वर्तते। प्रत्यूषसमये युवाभ्यामप्यस्माभिः सह तत्र वनोद्देशे गन्तव्यं। एतस्मिन्नन्तरे पापबुद्धिर्गृहे गत्वा स्वं जनकं समुवाच। तात प्रभूतो ऽयं मयार्थो धर्मबुद्धेश्चोरितः। स च तव वचनेन परिणतिं गच्छति। अन्यथास्माकं प्राणैः सह यास्यति। स चाह। वत्स तद्वद द्रुतं येन प्रोक्ता स्थिरतां नयामि। पापबुद्धिः प्राह। तात अस्ति तस्मिन् प्रदेशे महाशमी। तस्या महत् कोटरमस्ति। तत्र त्वं साम्प्रतमेव प्रविश। ततः प्रभाते यदाहं सत्यश्रावणं करोमि। तदा त्वया वाच्यं यद्धर्मबुद्धिश्चौर इति। तथानुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिर्धौतप्रावरणो धर्मबुद्धिपुरःसरो धर्माधिकरणिकैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच।

आदित्यचन्द्रावनिलो ऽनलश्च द्यौर्भूमिरापो हृदयं मनश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मो हि जानाति नरस्य वृत्तं ॥४५३॥

भगवति वनदेवते आवयोर्मध्ये यश्चौरस्तं कथय। अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच। भो शृणुत शृणुत धर्मबुद्धिनापहृतमेतद्धनं। तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः परिवेष्य वह्निना सन्दीपितं। अथ

ज्वलति तस्मिन्नर्द्धदग्धशरीरः स्फुटिताक्षः करुणं परिदेवयन् पापबुद्धिपिता शमीकोटरान्निश्चक्राम। ततश्च तैः सर्वैः पृष्टः। भो किमिदं। इत्युक्ते स पापबुद्धिविचेष्टितं सर्वमिदं तेषां निवेदयित्वोपरतः। अथ तं पापबुद्धिं शमीशाखायां प्रविलम्ब्य राजपुरुषा धर्मबुद्धिं प्रशस्येदमूचुः। अहो साध्विदमुच्यते।

उपायं चिन्तयेत् प्राज्ञः तथापायं च चिन्तयेत्।
पश्यतो वकमूर्खस्य नकुलेन हता वकाः ॥४५४॥

कथा ॥२०॥ धर्मबुद्धिः प्राह। कथमेतत्। ते प्रोचुः। अस्ति कस्मिंश्चिद्वनोद्देशे बहुवकसनाथो वटपादपः। तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म। स च वकबालकानजातपक्षानपि सदैव भक्षयन् कालं नयति। अथैको वकस्तेन भक्षितान्यपत्यानि दृष्ट्वा शिशुवैराग्यात् सरस्तीरमासाद्य वाष्पपूरितनयनो ऽधोमुखस्तिष्ठति। तं च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच। माम किमेवं रुद्यते भवताद्य। स आह। भद्र किं करोमि। मन्दभाग्यो ऽहं। मम बालकाः स्वजनाश्च वटकोटरनिवासिना सर्पेण भक्षिताः। तद्दुःखदुःखितो ऽहं रोदिमि। तत् कथय मे यद्यस्ति कश्चिदुपायस्तद्विनाशाय। तदाकर्ण्य कुलीरकश्चिन्तयामास। अयं तावदस्मज्जातिसहजवैरी। तत् तथाविधं सत्यानृतमुपदेशं प्रयच्छामि। यथान्ये ऽपि वकाः सङ्क्षयमायान्ति। उक्तं च।

नवनीतसमां वाणीं कृत्वा चित्तं तु निर्दयं।
तथा प्रबाध्यते शत्रुः सान्वयो म्रियते यथा ॥४५५॥

आह च। माम यद्येवं तन्मत्स्यमांसखण्डानि नकुलबिलद्वारात् सर्पकोटरं यावत् प्रक्षिप। येन नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति। तथानुष्ठिते मत्स्यमांसखण्डानुसारिणा नकुलेन कृष्णसर्पं निहत्य ते ऽपि तद्वृक्षाश्रया वकाः सर्वे शनैः शनैर्भक्षिताः। अतो वयं ब्रूमः।

उपायं चिन्तयेत् प्राज्ञः तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलेन हृता बकाः ॥४५६॥

तदनेन पापबुद्धिनोपायश्चिन्तितो नापायः। ततस्तत्फलं प्राप्तं। यतो ऽहं ब्रवीमि।

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम।
पुत्रेण व्यर्थपाण्डित्यात् पिता धूमेन घातितः ॥४५७॥

एवं मूढ त्वयाप्युपायश्चिन्तितो नापायः। तन्न भवसि त्वं सज्जनः। केवलं पापबुद्धिवत् तत्र भवसि। त्वं मया परिज्ञातः स्वामिनः प्राणसन्देहानयनात्। प्रकटीकृतं त्वया स्वयमेवात्मनो दुष्टत्वं कौटिल्यं च। अथवा साध्विदमुच्यते।

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गं।
यदि जलदध्वनिमुदितास्त एव मूढा न नृत्येयुः ॥४५८॥

नूनं त्वं स्वामिनमप्येनां दशां नयसि। तदस्मद्विधस्य का गणना। तस्मान्ममासन्नेन भवता न भाव्यं। उक्तं च।

तुलां लोहसहस्रस्य खादन्ति यत्र मूषकाः।
गजं तत्र हरेच्छ्येनो बालकं को ऽत्र विस्मयः ॥४५९॥

दमनक आह। कथमेतत्। करटकः कथयति। अस्ति कस्मिंश्चि कथा
दधिष्ठाने नान्दुको नाम वणिक्पुत्रः। अपरं च तत्रैव स्थाने वणि ॥२१॥
ग्लक्ष्मणो नाम प्रतिवसति स्म। स च विभवक्षयाद्देशान्तरगमनं व्यचिन्तयत्। उक्तं च।

यत्र देशे ऽथवा स्थाने भोगान् भुक्त्वा स्ववीर्यतः।
तस्मिन् विभवहीनो यो वसेत् स पुरुषाधमः ॥४६०॥

तथा च। येनाहङ्कारयुक्तेन चिरं विलसितं पुरा।
दीनं वदति तत्रैव यः परेषां स निन्दितः ॥४६१॥

तस्य च गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुलासीत्। तां च